भिर्व्यशेमहि देवहितँय्यदायुः ॥८॥ शतमिन्नु शरदोऽअन्ति देवा यत्रा नश्च्चक्क्रा जरसन्तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मद्ध्या रीरिषतायुर्ग्गन्तोः ॥९॥ अदितिद्द्यौरदितिरन्तरिक्क्षमदितिर्म्माता स पिता स पुत्रः । व्विश्श्वे देवाऽअदितिः पञ्चजनाऽअदितिर्ज्जातम-दितिर्ज्जनित्त्वम् ॥१०॥ द्यौः शान्तिरन्तरिक्क्षग्गूंशान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । व्वनस्पतयः शान्तिर्व्विश्श्वे देवाः शान्तिर्ब्ब्रह्म्म शान्तिः सर्वग्गूंशान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥११॥ ॐ यतो यतः समीहसे ततो नोऽअभयङ्कुरु । शन्नः कुरु प्प्रजाब्भ्योऽभयन्नः पशुब्भ्यः ॥१२॥ ॐ गणानान्त्वा गणपतिग्गूंहवामहे प्प्रियाणान्त्वा प्प्रियपतिग्गूंहवामहे निधीनान्त्वा निधिपतिग्गूंहवामहे व्वसो मम । आऽहमजानि गर्ब्भधमा त्त्वमजासि गर्ब्भधम् ॥१३॥ ॐ अम्बेऽअम्बिकेऽम्बालिके न मा नयति कश्च्चन । ससस्त्यश्श्वकः सुभद्द्रिकाङ्काम्पीलवासिनीम् ॥१४॥

सुशान्तिर्भवतु । सर्वारिष्टशान्तिर्भवतु । अयमारम्भः शुभाय भवतु । अमृतारम्भो भवतु । ॐ देवाऽआयान्तु यातुधानाऽअपयान्तु विष्णो देवयजनं रक्षस्व ॥

ॐ श्रीमन्महागणाधिपतये नमः । ॐ सुरभ्यै नमः । ॐ लक्ष्मीनारायणाभ्यां नमः । ॐ उमामहेश्वराभ्यां नमः । ॐ वाणीहिरण्यगर्भाभ्यां नमः । ॐ शचीपुरन्दराभ्यां नमः । ॐ मातापितृचरणकमलेभ्यो नमः । ॐ इष्टदेवताभ्यो नमः । ॐ कुलदेवताभ्यो नमः । ॐ ग्रामदेवताभ्यो नमः । ॐ स्थानदेवताभ्यो नमः । ॐ वास्तुदेवताभ्यो नमः । ॐ सर्वेभ्यो देवेभ्यो नमः । ॐ सर्वेभ्यो ब्राह्मणेभ्यो नमः । ॐ सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः ॥

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥१॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥२॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥३॥ शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥४॥





अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥५॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥६॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः ॥७॥ तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव । विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥८॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दी-वरश्यामो हृदयस्थो जनार्दनः ॥९॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥१०॥ अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥११॥ स्मृते सकलकल्याणभाजनं यत्र जायते । पुरुषं तमजं नित्यं व्रजामि शरणं हरिम् ॥१२॥ सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः । देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥१३॥ विश्वेशं माधवं ढुण्ढिं दण्डपाणिं च भैरवम् । वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम् ॥१४॥ वक्रतुण्ड महाकाय कोटिसूर्यसमप्रभ । निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥१५॥ विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् । सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थसिद्धये ॥१६॥ नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्यऽएव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ॥१७॥ अयोध्यां मिथिलां काशीं हरिद्वारं सरिद्वराम् । वृन्दावनं चित्रकूटं ध्यात्वा कर्म समारभे ॥१८॥ इति देवतानमस्कारानन्तरं हस्ते त्रिकुशजलादीन्यादाय प्रधानसङ्कल्पं कुर्यात् ।।

**प्रधानसङ्कल्पः**- ॐ विष्णुर्विष्णुर्विष्णुः । ॐ नमः श्री परमात्मने । ॐ स्वस्ति श्रीमन्मुकुन्दसच्चिदानन्दपरब्रह्मणः पुराणपुरुषस्य अचिन्त्यानन्तशक्तेर्विष्णोराज्ञया प्रवर्तमानस्याद्य श्रीब्रह्मणो द्वितीयपरार्धे वाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे तत्प्रथमचरणे अमुकनामसम्वत्सरे अमुकर्तौ अमुकायने अमुकगोले अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकराशिस्थिते श्रीमद्भास्करे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवं ग्रहगुणगणविशिष्टायां शुभपुण्यवेलायां जम्बूद्वीपे भरतखण्डे गङ्गा-गो-देव-ब्राह्मणादिभिः पाविते नानातीर्थयुते परमपवित्रतमे भारतवर्षे अमुकप्रदेशे अमुकक्षेत्रादिके भागीरथ्या

**अमुकदिग्भागे गो-देव-द्विज-गुरुसन्निधाने अमुकगोत्रः अमुकशर्मा (वर्मा, गुप्तः) सपत्नीकोऽहं ममात्मनः सपत्नीकस्य सकुटुम्बस्य श्रुतिस्मृति-तन्त्रपुराणोक्तफलप्राप्त्यर्थं मम ज्ञाताज्ञातसकलपापक्षयपूर्वकम् आयुरा-रोग्यैश्वर्यादिवृद्ध्यर्थं परमेश्वरप्रीतिपूर्वकं वेदादिशास्त्रप्रतिष्ठार्थं च श्रीमद्वेदव्यासपूजनकर्म करिष्ये ॥**

**तदङ्गत्वेन दिग्रक्षणं भैरवनमस्कारं कर्मकलशार्चनं दीपपूजनं शङ्खघण्टाद्यर्चनं च करिष्ये ॥**

**तत्रादौ निर्विघ्नतासिद्ध्यर्थं सिद्धिबुद्धिसहितमहागणाधिपतिपूजनं करिष्ये ॥**

**पुनः पञ्चायतनदेवतापूजनं कलशपूजनं पुण्याहवाचनम् आचार्यादीनां वरण-पूजनं नवग्रहमण्डलपूजनं कलशोपरि असङ्ख्यातरुद्रपूजनं (सर्वतोभद्रमण्डले सति तत्र ब्रह्मादिदेवतास्थापनं तदुपरि कलशस्थापनम्) प्रधानदेवतापूजनं गुरुपूजनं च करिष्ये ॥**

**दिग्रक्षणम्-** वामहस्ते रक्षासूत्रसहितगौरसर्षपान्गृहीत्वा दक्षिणेन आच्छाद्य रक्षोघ्नमन्त्रं पठेत्- **ॐ रक्षोहा विश्श्वचर्षणिरभि योनिमयोहते । द्रोणे सधस्थमासदत् ॥ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः । ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ॥१॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् । सर्वेषामविरोधेन पूजाकर्मसमारभे ॥२॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः । स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥३॥ भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः । ते सर्वेऽप्यपगच्छन्तु पूजाकर्मकरोम्यहम् ॥४॥** एतैर्मन्त्रैः सर्वदिक्षु सर्षपान्विकीर्य वामपादपार्ष्णिना त्रिवारं भूमिं ताडयेत् । नेत्रोदकस्पर्शः ।

**भैरवनमस्कारः- ॐ यो भूतानामधिपतिर्य्यस्मिँल्लोकाऽ अधिश्श्रिताः । यऽईशे महतो महाँस्तेन गृह्णामि त्वामहम्मयि गृह्णामि त्वामहम् ॥ 'ॐ भैरवाय नमः'** इति सम्पूज्य **'तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम । भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥'**





इत्यनुज्ञां गृहीत्वाऽन्यपूजनं कुर्यात् ।।

**कर्मकलशार्चनम्-** स्ववामभागेऽष्टदलाक्षतपुञ्जोपरि सुवासित-जलपूर्णं कलशं संस्थाप्य तत्र वरुणमावाहयेत् । हस्तेऽक्षतान् गृहीत्वा । **ॐ तत्त्वा यामि ब्ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्ब्भिः । अहेडमानो व्वरुणेह बोद्ध्युरुशग्गूंस मा नऽआयुः प्प्रमोषीः ॥** ॐ भूर्भुवः स्वः अस्मिन्कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकम् आवाहयामि स्थापयामि । **ॐ मनो जूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्त्वरिष्टँय्यज्ञग्गूंसमिमन्दधातु । विश्श्वेदेवासऽ इह मादयन्तामो॥३प्रतिष्ठ ॥** ॐ भूर्भुवः स्वः वरुणाय नमः । वरुण सुप्रतिष्ठितो वरदो भव । इति वरुणं प्रतिष्ठाप्य यथोपचारैः पूजयेत् । ततोऽनामिकया कलशं स्पृष्ट्वा कलशजलमभिमन्त्रयेत् । **कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥१॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥२॥ अङ्गैश्च सहिताः सर्वे कलशाम्बुसमाश्रिताः । अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा । आयान्तु देवपूजार्थं दुरितक्षयकारकाः ॥३॥ गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धो कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥४॥ ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे । तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥५॥** ततः पूजयेत्- पूर्वे **ॐ ऋग्वेदाय नमः** । दक्षिणे **ॐ यजुर्वेदाय नमः** । पश्चिमे **ॐ सामवेदाय नमः** । उत्तरे **ॐ अथर्ववेदाय नमः** । कलशमध्ये **ॐ अप्पतिवरुणाय नमः । ॐ गङ्गादिनदीभ्यो नमः । ॐ सप्तसागरेभ्यो नमः । ॐ सर्वतीर्थेभ्यो नमः** । सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि । इति सम्पूज्य वेदभगवन्तं कलशस्थं वरुणादिकं च प्रार्थयेत्- **षड्भिरङ्गैरुपेताय विविधैरव्ययैरपि । शाश्वताय नमस्कुर्मो वेदाय च भवाय च ॥ जलाधिप नमस्तुभ्यं नमस्ते पद्मिनीप्रिय । पूजाकर्मसमृद्ध्यर्थं पात्रेऽस्मिन् सुस्थिरो भव ॥ सर्वतीर्थमयी पुण्या**

**सर्वदेवमयी शुभा । सर्वशास्त्रमयी गङ्गा मनोऽङ्गानि पुनातु मे ॥** पुनः अङ्कुशमुद्रया सूर्यमण्डलात् सर्वाणि तीर्थान्यावाह्य '**वम्**' इति धेनुमुद्रया अमृतीकृत्य '**हुम्**' इति कवचेनावगुण्ठ्य मत्स्यमुद्रया आच्छाद्य, '**वं वरुणाय नमः**' इत्यनेनाष्टवारमभिमन्त्र्य तस्मादुदकादुदकं गृहीत्वा- **अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ ॐ पुण्डरीकाक्षः पुनातु ३ ॥** इति मन्त्रेण वारत्रयं कुशोदकैरात्मानं प्रोक्षयेत् । पुनः स्वल्पोदकमादाय- **ॐ आपो हि ष्ठा मयोभुवस्ता नऽऊर्ज्जे दधातन । महेरणाय चक्षसे ॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥** इति पूजासम्भारान् सम्प्रोक्ष्य तां च भूमिं प्रोक्षयेत् ।

**दीपपूजनम्-** घृतदीपं प्रज्वाल्य देवतादक्षिणे स्ववामभागे निर्वातस्थले निधाय । **ॐ अग्निज्ज्योतिषा ज्ज्योतिष्मान्नुक्मो व्वर्च्चसा व्वर्च्चस्वान् । सहस्रदाऽअसि सहस्राय त्वा ॥** ॐ दीपदेवतायै नमः । इति सम्पूज्य नमस्कुर्यात्- **भो दीप देवरूपस्त्वं कर्मसाक्षी ह्यविघ्नकृत् । यावत्पूजासमाप्तिः स्यात्तावत्त्वं सुस्थिरो भव ॥** अनेन पूजनेन दीपदेवता प्रीयतां न मम ।।

**शङ्खपूजनम्-** (महाभिषेकं सर्वत्र शङ्खेनैव प्रकल्पयेत् । सर्वत्रैव प्रशस्तोऽब्जः शिवसूर्यार्चनं विना ।।) शङ्खे जलं प्रपूर्य दक्षिणे संस्थाप्य हस्ते गन्धाक्षतपुष्पाण्यादाय पूजयेत्- **ॐ अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥** ॐ शङ्खाय नमः । इति सम्पूज्य नमस्कुर्यात्- **ॐ पाञ्चजन्याय विद्महे पावमानाय धीमहि । तन्नः शङ्खः प्रचोदयात् ॥ त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे । नमितः सर्वदेवैश्च पाञ्चजन्य नमोऽस्तु ते ॥** अनेन पूजनेन शङ्खदेवता प्रीयतां न मम ।।





**घण्टापूजनम्-** (आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् । घण्टानादं प्रकुर्वीत पश्चाद्घण्टां प्रपूजयेत् ।।) हस्ते गन्धाक्षतपुष्पाणि गृहीत्वा घण्टां वादयित्वा मध्ये पूजयेत्- **ॐ सुपर्णोऽसि गरुत्माँस्त्रिवृत्ते शिरो गायत्रञ्चक्षुर्बृहद्रथन्तरे पक्षौ । स्तोमऽआत्माच्छन्दाग्गुँस्यङ्गानि यजूग्गुँषि नाम ॥ साम ते तनूर्व्वामदेव्व्यँय्यज्ञायज्ञियम्पुच्छन्धिष्ण्याः शफाः । सुपर्णोऽसि गरुत्मान्दिवङ्गच्छ स्वः पत ॥** ॐ घण्टास्थगरुडाय नमः । इति सम्पूज्य नमस्कुर्यात्- **पक्षिराज नमस्तुभ्यं श्रीविष्णोः प्रियवाहन । रक्षोभयमपाकृत्य सर्वविघ्नान्निवारय ॥** अनेन पूजनेन घण्टास्थगरुडः प्रीयतां न मम ।। पुनः सविधि सिद्धिबुद्धिसहितश्रीमन्महागणाधिपतिपूजनम्, पञ्चायतन-देवतापूजनम्, कलशपूजनम्, आचार्यादिवरणपूजनम्, रक्षासूत्रबन्धनं च कुर्यात् ।।

## सिद्धिबुद्धिसहितमहागणाधिपतिपूजनम्

ताम्रपात्रे सिद्धिबुद्धिसहितं महागणाधिपतिं संस्थाप्य हस्ते गन्धाक्षतपुष्पाण्यादाय ध्यायेत् ।

**शैवैस्त्वदीयैरुत वैष्णवैश्च सौरैश्च शाक्तैरपि सर्वकार्ये ।**
**शुभाशुभे लौकिकवैदिके च त्वामर्चयामि प्रथमं गणेश ॥**

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहितश्रीमन्महागणाधिपतये नमः ध्यायामि । आवाहनम्- **ॐ गणानान्त्वा गणपतिग्गूंहवामहे प्रियाणान्त्वा प्रियपतिग्गूंहवामहे निधीनान्त्वा निधिपतिग्गूंहवामहे व्वसो मम । आऽहमजानि गर्ब्भधमा त्त्वमजासि गर्ब्भधम् ॥** प्रतिष्ठापनम्- **ॐ मनो जूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्यज्ज्ञमिमन्तनोत्त्वरिष्टँय्यज्ज्ञग्गूंसमिमं दधातु । व्विश्श्वेदेवासऽइह मादयन्तामो॥३ँप्रतिष्ठ ॥** सिद्धिबुद्धिसहित श्रीमन्महागणाधिपते सुप्रतिष्ठितो वरदो भव ।। आसनम्- **ॐ व्वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्य्यः । इमन्तमभितिष्ठामि यो मा कश्च्चाभिदासति ॥** पाद्यम्- **ॐ एतावानस्य महिमातो ज्ज्यायाँश्च्च पूरुषः । पादोऽस्य व्विश्श्वा भूतानि त्रिपादस्यामृतन्दिवि ॥** अर्घ्यम्- **ॐ धामन्ते व्विश्श्वम्भुवनमधि श्श्रितमन्तःसमुद्द्रे हृद्यन्तरायुषि । अपामनीके समिथे यऽआभृतस्तमश्याम मधुमन्तन्तऽऊर्म्मिम् ॥** आचमनीयम्- **ॐ इमम्मे व्वरुण श्श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ॥** पयःस्नानम्- **ॐ पयसो रूपँय्यद्यवा दध्नो रूपङ्कर्क्कन्धूनि । सोमस्य रूपँव्वाजिनग्गूंसौम्म्यस्य रूपमामिक्षा ॥** क्षीरादिस्नानान्ते शुद्धोदकस्नानम् आचमनीयं च दद्यात् ।। दधिस्नानम्- **ॐ दधिक्क्राव्णोऽअकारिषञ्जिष्णोरश्श्वस्य व्वाजिनः । सुरभि नो मुखा करत्त्प्रणऽआयूग्गुँषि तारिषत् ॥** घृतस्नानम्- **ॐ घृतम्मिमिक्षे घृतमस्य योनिर्घृते श्श्रितो घृतँव्वस्य धाम । अनुष्ष्वधमावह मादयस्व स्वाहाकृतँव्वृषभ व्वक्षि हव्व्यम् ॥** मधुस्नानम्- **ॐ स्वाहा मरुद्भिः**





**परिश्श्रीयस्व दिवः सग्गुँस्पृशस्प्पाहि । मधु मधु मधु ॥** शर्करास्नानम्- **ॐ अपाग्गुँरसमुद्द्वयसग्गूंसूर्य्ये सन्तग्गूंसमाहितम् । अपाग्गुँरसस्य यो रसस्तँव्वो गृह्णाम्युत्तममुपयामगृहीतोऽसीन्द्राय त्त्वा जुष्ट्टङ्गृह्णाम्म्येष ते योनिरिन्द्राय त्त्वा जुष्ट्टतमम् ॥** गन्धोदकस्नानम्- **ॐ गन्धर्व्वस्त्वा व्विश्श्वावसुः परिदधातु व्विश्श्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईडितः ॥** उद्वर्तनस्नानम्- **ॐ अग्गूंशुना ते अग्गूंशुः पृच्च्यताम्परुषा परुः । गन्धस्ते सोममवतु मदाय रसोऽअच्च्युतः ॥** तीर्थोदकस्नानम्- **ॐ ये तीर्त्थानि प्प्रचरन्ति सृकाहस्ता निषङ्गिणः । तेषाग्गुँसहस्रयोजनेऽव धन्वानि तन्मसि ॥** ततः सर्वोपचारार्थे गन्धाक्षतपुष्पैः सम्पूज्य निर्माल्यमुत्तरे विसृज्य पुनः सम्पूज्याभिषेकं कुर्यात् ।

## शुक्लयजुर्वेदीयगणपतिसूक्तम्

**ॐ आ तू नऽइन्द्र व्वृत्रहन्नस्म्माकमर्द्धमागहि । महान्महीभिरूतिभिः ॥१॥ त्वमिन्द्र प्प्रतूर्त्तिष्ष्वभि व्विश्श्वाऽअसि स्पृधः । अशस्तिहा जनिता व्विश्श्वतूरसि त्त्वन्तूर्य्यतरुष्यतः ॥२॥ अनु ते शुष्म्मन्तुरयन्तमीयतुः क्क्षोणी शिशुन्न मातरा । व्विश्श्वास्ते स्पृधः श्श्रथयन्त मन्न्यवे व्वृत्रँय्यदिन्द्र तूर्व्वसि ॥३॥ यज्ज्ञो देवानाम्प्रत्त्येति सुम्म्नमादित्त्यासो भवता मृडयन्तः । आवोऽर्व्वाची सुमतिर्व्ववृत्त्यादग्गूंहोश्चिद्द्या व्वरिवोवित्तरासत् ॥४॥ अदब्धेभिः सवितः पायुभिष्ट्वग्गूंशिवेभिरद्य परिपाहि नो गयम् । हिरण्ण्यजिह्वः सुविताय नव्व्यसे रक्क्षा माकिर्न्नोऽअघशग्गूंसऽईशत ॥५॥ प्र वीरया शुचयो दद्रिरे वामद्ध्वर्य्युभिर्म्मधुमन्तः सुतासः । व्वह व्वायो नियुतो याह्य्यच्छा पिबा सुतस्यान्धसो मदाय ॥६॥ गावऽउपावतावतम्मही यज्ज्ञस्य रप्सुदा । उभा कर्ण्णा हिरण्ण्यया ॥७॥ काव्व्ययोराजानेषु क्क्रत्त्वा दक्क्षस्य दुरोणे । रिशादसा सधस्त्थऽआ ॥८॥** इति

## गणपत्यथर्वशीर्षम्

ॐ नमस्ते गणपतये । त्वमेव प्रत्यक्षं तत्त्वमसि । त्वमेव केवलं कर्ताऽसि । त्वमेव केवलं धर्ताऽसि । त्वमेव केवलं हर्ताऽसि । त्वमेव सर्वं खल्विदं ब्रह्मासि । त्वं साक्षादात्माऽसि नित्यम् ॥१॥ ऋतं वच्मि । सत्यं वच्मि ॥२॥ अव त्वं माम् । अव वक्तारम् । अव श्रोतारम् । अव दातारम् । अव धातारम् । अवानूचानमव शिष्यम् । अव पश्चात्तात् । अव पुरस्तात् । अवोत्तरात्तात् । अव दक्षिणात्तात् । अव चोर्ध्वात्तात् । अवाधरात्तात् । सर्वतो मां पाहि पाहि समन्तात् ॥३॥ त्वं वाङ्मयस्त्वं चिन्मयः । त्वमानन्दमयस्त्वं ब्रह्ममयः । त्वं सच्चिदानन्दाद्वितीयोऽसि । त्वं प्रत्यक्षं ब्रह्मासि । त्वं ज्ञानमयो विज्ञानमयोऽसि ॥४॥ सर्वं जगदिदं त्वत्तो जायते । सर्वं जगदिदं त्वत्तस्तिष्ठति । सर्वं जगदिदं त्वयि लयमेष्यति । सर्वं जगदिदं त्वयि प्रत्येति । त्वं भूमिरापोऽनलोऽनिलो नभः । त्वं चत्त्वारि वाक्पदानि ॥५॥ त्वं गुणत्रयातीतः । त्वं देहत्रयातीतः । त्वं कालत्रयातीतः । त्वमवस्थात्रयातीतः । त्वं मूलाधारस्थितोऽसि नित्यम् । त्वं शक्तित्रयात्मकः । त्वां योगिनो ध्यायन्ति नित्यम् । त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्मभूर्भुवः स्वरोम् ॥६॥ गणादिं पूर्वमुच्चार्य वर्णादींस्तदनन्तरम् । अनुस्वारः परतरः । अर्धेन्दुलसितम् । तारेण रुद्धम् । एतत्तवमनुस्वरूपम् । गकारः पूर्वरूपम् । अकारो मध्यमरूपम् । अनुस्वारश्चान्त्यरूपम् । बिन्दुरुत्तररूपम् । नादः सन्धानम् । सꣳहिता सन्धिः । सैषा गणेशविद्या । गणक ऋषिः । निचृद्गायत्री छन्दः । श्रीमहागणपतिर्देवता । ॐ गं गणपतये नमः ॥७॥ एकदन्ताय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्ती प्रचोदयात् ॥८॥ एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम् । अभयं वरदं हस्तैर्बिभ्राणं मूषकध्वजम् ॥ रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम् । रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम् ॥ भक्तानुकम्पिनं देवं जगत्कारणमच्युतम् । आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् ॥ एवं





ध्यायति यो नित्यं स योगी योगिनां वरः ॥९॥ ॐ नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्तेऽस्तु लम्बोदरायैकदन्ताय विघ्नविनाशिने शिवसुताय श्रीवरदमूर्तये नमो नमः ॥१०॥ एतदथर्वशीर्षं योऽधीते स ब्रह्मभूयाय कल्पते । स सर्वविघ्नैर्न बाध्यते । स सर्वतः सुखमेधते । स पञ्चमहापातकात्प्रमुच्यते । सायमधीयानो दिवसकृतं पापं नाशयति । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायं प्रातः प्रयुञ्जानोऽपापो भवति । सर्वत्राधीयानोऽपविघ्नो भवति । धर्मार्थकाममोक्षं च विन्दति । इदमथर्वशीर्षमशिष्याय न देयम् । यो यदि मोहाद्दास्यति स पापीयान् भवति । सहस्रावर्तनाद्यं यं काममधीते तं तमनेन साधयेत् ॥११॥ अनेन गणपतिमभिषिञ्चति स वाग्मी भवति । चतुर्थ्यामनश्नञ्जपति स विद्यावान् भवति । इत्यथर्वणवाक्यम् । ब्रह्माद्यावरणं विद्यान्न बिभेति कदाचनेति ॥१२॥ यो दूर्वाङ्कुरैर्यजति स वैश्रवणोपमो भवति । यो लाजैर्यजति स यशोवान् भवति । स मेधावान् भवति । यो मोदकसहस्रेण यजति स वाञ्छितफलमवाप्नोति । यः साज्यसमिद्भिर्यजति स सर्वं लभते स सर्वं लभते । अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा सूर्यवर्चस्वी भवति । सूर्यग्रहे महानद्यां प्रतिमासन्निधौ वा जप्त्वा सिद्धमन्त्रो भवति । महाविघ्नात् प्रमुच्यते । महादोषात्प्रमुच्यते । महापापात् प्रमुच्यते । महाप्रत्यवायात्प्रमुच्यते । स सर्वविद्भवति । स सर्वविद्भवति । य एवं वेद इति ॥१३॥

## सङ्कटनाशनगणेशस्तोत्रम्

नारद उवाच- प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम् । भक्तावासं स्मरेन्नित्यमायुःकामार्थसिद्धये ॥१॥ प्रथमं वक्रतुण्डं च एकदन्तं द्वितीयकम् । तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम् ॥२॥ लम्बोदरं पञ्चमं च षष्ठं विकटमेव च । सप्तमं विघ्नराजं च धूम्रवर्णं तथाऽष्टमम् ॥३॥ नवमं भालचन्द्रं च दशमं तु विनायकम् । एकादशं गणपतिं द्वादशं तु गजाननम् ॥४॥ द्वादशैतानि नामानि त्रिसन्ध्यं यः

**पठेन्नरः । न च विघ्नभयं तस्य सर्वसिद्धिकरं प्रभो ।।५।। विद्यार्थी लभते विद्यां धनार्थी लभते धनम् । पुत्रार्थी लभते पुत्रान्मोक्षार्थी लभते गतिम् ।।६।। जपेद् गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत् । सम्वत्सरेण सिद्धिं च लभते नात्र संशयः ।।७।। अष्टभ्यो ब्राह्मणेभ्यश्च लिखित्वा यः समर्पयेत् । तस्य विद्या भवेत्सर्वा गणेशस्य प्रसादतः ।।८।।** अमृताभिषेकोऽस्तु । ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः । अभिषेकं समर्पयामि ।

शुद्धोदकस्नानम्- **ॐ शुद्धवालः सर्व्वशुद्धवालो मणिवालस्तऽ आश्श्विनाः श्येतः श्येताक्षोऽरुणस्ते रुद्द्राय पशुपतये कर्ण्णा यामाऽअवलिप्ता रौद्द्रा नभोरुपाः पार्ज्जन्न्याः ।।** ततः सिद्धिबुद्धिसहितं श्रीमहागणाधिपतिं रक्तवस्त्रोपरि गोधूमादिनिर्मिता-ष्टदले पीठे स्वसमीपे संस्थापयेत् । वस्त्रम्- **ॐ सुजातो ज्ज्योतिषा सह शर्म्म व्वरूथमासदत्स्वः । व्वासोऽअग्ग्ने व्विश्श्वरूपग्गूंसँ-व्ययस्व व्विभावसो ।।** यज्ञोपवीतम्- **ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ।।** गन्धानुलेपनम्- **ॐ त्वाङ्गन्धर्व्वाऽ अखनँस्त्वामिन्द्रस्त्वाम्बृहस्प्पतिः । त्वामोषधे सोमो राजा व्विद्द्वान्यक्ष्मादमुच्च्यत ।।** अक्षताः- **ॐ अक्षन्नमीमदन्त ह्यवप्प्रियाऽअधूषत । अस्तोषत स्वभानवो व्विप्प्रा नविष्ठ्या मती योजा न्विन्द्र ते हरी ।।** पुष्पाणि- **ॐ ओषधीः प्प्रतिमोदद्ध्वं पुष्प्पवतीः प्प्रसूवरीः । अश्श्वाऽइव सजित्त्वरीर्व्वीरुधः पारयिष्ण्ववः ।।** दूर्वाङ्कुराः- **ॐ काण्डात्त्काण्डात्त्प्ररोहन्ती परुषः परुषस्प्परि । एवानो दूर्व्वे प्प्रतनु सहस्रेण शतेन च ।।** सौभाग्यद्रव्याणि- **ॐ अहिरिव भोगैः पर्य्येति बाहुञ्ज्याया हेतिम्परिबाधमानः । हस्त्तग्घ्नो व्विश्श्वा व्ययुनानि व्विद्द्वान्पुमान्पुमाग्गुँसम्परिपातु व्विश्श्वतः ।।**





**गणपतिपीठदेवतापूजनम्** । गणेशपीठे मण्डूकादिपीठदेवताः पद्धतिमार्गेण संस्थाप्य- **ॐ मं मण्डूकादि परतत्त्वान्तपीठदेवताभ्यो नमः ।** इति सम्पूज्य पूर्वाद्यष्टदिक्षु मध्ये च नवपीठशक्तीः पूजयेत् । **ॐ तीव्रायै नमः । चालिन्यै । नन्दायै । भोगदायै । कामरूपिण्यै । उग्रायै । तेजोवत्यै । सत्यायै । विघ्ननाशिन्यै नमः ।।९।।**

**षड्विनायकपूजनम्** । गोधूमादिधान्यपुञ्जेषु हरिद्रारञ्जितेषु षड्विनायकाः स्थाप्याः । **ॐ मोदाय नमः । प्रमोदाय । सुमुखाय । दुर्मुखाय । अविघ्नाय । विघ्नकर्त्रे । 'ॐ मोदादिषड्विनायकेभ्यो नमः'** इति पूजयेत् ।

**अङ्गदेवतापूजनम्** । वामहस्ते गन्धाक्षतपुष्पपात्रं गृहीत्वा दक्षिणहस्तेन पूजयेत् । **ॐ श्रीगणेश्वराय नमः** पादौ पूजयामि । **ॐ विघ्नराजाय नमः** जानुनी । **ॐ आखुवाहनाय नमः** ऊरू । **ॐ हेरम्बाय नमः** कटी । **ॐ कामारिसूनवे नमः** नाभिम् । **ॐ लम्बोदराय नमः** उदरम् । **ॐ गौरीसुताय नमः** स्तनौ । **ॐ गणनायकाय नमः** हृदयम् । **ॐ स्थूलकण्ठाय नमः** कण्ठम् । **ॐ स्कन्दाग्रजाय नमः** स्कन्धौ । **ॐ पाशहस्ताय नमः** हस्तौ । **ॐ गजवक्त्राय नमः** वक्त्रम् । **ॐ विघ्नहर्त्रे नमः** ललाटम् । **ॐ सर्वेश्वराय नमः** शिरः । **ॐ श्रीगणाधिपाय नमः** सर्वाङ्गम् **।। ॐ भूर्भुवः स्वः अङ्गदेवताभ्यो नमः** सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि । अनेनाङ्गदेवताऽर्चनेन सिद्धिबुद्धिसहितः श्रीमन्महागणपतिः प्रीयताम् ।

## आवरणदेवतापूजनम्

दक्षिणभागे पात्रे सामान्यार्घजलं प्रक्षिप्य दक्षिणहस्तेन रक्ताक्षतार्पणं सङ्कल्पं च कुर्यात् । पुष्पाञ्जलिमादाय देवं प्रार्थयेत्- **उद्यद्दिनेश्वररुचिं निजहस्तपद्मैः पाशाङ्कुशाभयवरान्दधतं गजास्यम् । रक्ताम्बरं सकलदुःखहरं गणेशं ध्यायेत्प्रसन्नमखिलाभरणाभिरामम् ।। सच्चिन्मयपरो देवः परामृतरसप्रियः । अनुज्ञां देहि मे देव परिवारार्चनाय**

**ते ।।** इति पठित्वा पुष्पाञ्जलिं गणेशोपरि दत्वा **पूजितोऽस्तु** इति वदेत् । षट्कोणवृत्ताष्टपत्रभूपुरात्मकयन्त्रे प्रतिमायां वा दक्षिणहस्तेन रक्ताक्षतान् गृहीत्वा पूजयेत् । (आवरणपूजा यन्त्र एव विहिता) ।

**प्रथमावरणपूजनम् ।** आग्नेय्यादिचतुर्दिक्षु मध्ये सर्वदिक्षु च षट्कोणकेसरेषु स्वाग्रादि प्रादक्षिण्येन षडङ्गानि पूजयेत् (पूज्य-पूजकयोर्मध्ये प्राचीति तत्त्वविदः प्राहुः) । आग्नेय्याम् **ॐ गां हृदयाय नमः** हृदये । नैर्ऋत्याम् **ॐ गीं शिरसे स्वाहा** शिरसि । वायव्याम् **ॐ गूं शिखायै वषट्** शिखायाम् । ऐशान्याम् **ॐ गैं कवचाय हुम्** कवचे । मध्ये (स्वाग्रे) **ॐ गौं नेत्रत्रयाय वौषट्** नेत्रत्रये । सर्वदिक्षु **ॐ गः अस्त्राय फट्** अस्त्रे ।।६।। **ॐ प्रथमावरणदेवताभ्यो नमः ।** इति पूजयेत् । ततः पुष्पाञ्जलिमादाय मूलमन्त्रमुच्चार्य–**अभीष्टसिद्धिं मे देहि शरणागत-वत्सल । भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ।।** अनेन प्रथमावरण–देवतार्चनेन सपरिवारमहागणपतिः प्रीयताम् **।।१।।**

**द्वितीयावरणम् ।** ततोऽष्टदले पूज्यपूजकयोर्मध्ये प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य दक्षहस्ते गन्धादीनि गृहीत्वा पूर्वाद्यष्टदिक्षु– **ॐ विद्यायै नमः । विधात्र्यै । भोगदायै । विघ्नघातिन्यै । निधिप्रदीपायै । पापघ्न्यै । पुण्यायै । शशिप्रभायै ।।८।। ॐ द्वितीयावरणदेवताभ्यो नमः ।** इति पूजयेत् । ततः पुष्पाञ्जलिमादाय मूलमन्त्रमुच्चार्य– **अभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ।।** अनेन द्वितीयावरणदेवतार्चनेन सपरिवारो महागणपतिः प्रीयताम् **।।२।।**

**तृतीयावरणम् ।** अष्टदलोपरि– **ॐ वक्रतुण्डाय नमः । एकदंष्ट्राय । महोदराय । हस्तिमुखाय । लम्बोदराय । विकटाय । विघ्नराजाय । धूम्रवर्णाय ।।८।। ॐ तृतीयावरणदेवताभ्यो नमः ।** इति पूजयेत् । ततः पुष्पाञ्जलिमादाय मूलमन्त्रमुच्चार्य– **अभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ।।** अनेन तृतीयावरणदेवतार्चनेन सपरिवारो महागणपतिः प्रीयताम् **।।३।।**





**चतुर्थावरणम् ।** ततो भूपुरे पूर्वादिक्रमेण दशदिक्षु– **ॐ लं इन्द्राय नमः । रं अग्नये । मं यमाय । क्षं निर्ऋतये । वं वरुणाय नमः । यं वायवे । कुं कुबेराय । हं ईशानाय । आं ब्रह्मणे । ह्रीं अनन्ताय ।।१०।। ॐ चतुर्थावरणदेवताभ्यो नमः ।** इति पूजयेत् । ततः पुष्पाञ्जलिमादाय मूलमन्त्रमुच्चार्य– **अभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम् ।।** अनेन चतुर्थावरणदेवतार्चनेन सपरिवारो महागणपतिः प्रीयताम् **।।४।।**

**पञ्चमावरणम् ।** तत इन्द्रादिसमीपे– **ॐ वं वज्राय नमः । शं शक्तये । दं दण्डाय । खं खड्गाय । पां पाशाय । अं अङ्कुशाय । गं गदायै । त्रिं त्रिशूलाय । पं पद्माय । चं चक्राय ।।१०।। ॐ पञ्चमावरणदेवताभ्यो नमः ।** इति पूजयेत् । ततः पुष्पाञ्जलिमादाय मूलमन्त्रमुच्चार्य– **अभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ।।**

प्रणमेत्– **ध्यायेन्नित्यं गणेशं परमसुखयुतं ध्यानसंस्थं त्रिनेत्रम् एकं देवं त्वमेकं सकलगुणयुतं देवदेवं प्रसन्नम् । शुण्डादण्डाढ्यगण्डोद्-गलितमदजलोल्लोलमत्तालिमालं श्रीमन्तं विघ्नराजं सकलसुखकरं श्रीगणेशं नमामि ।।** अनेन पञ्चमावरणदेवतार्चनेन सपरिवारो महागणपतिः प्रीयताम् ।।

## श्रीगणपत्यष्टोत्तरशतनामभिः पूजनम्

ॐ अद्य महागणपतिप्रसादसिद्धये गणपत्यष्टोत्तरशतनामभिः प्रत्येकनाम्ना दूर्वाङ्कुरपुष्पसमर्पणं करिष्ये ।।

**ॐ विनायकाय नमः । विघ्नराजाय । गौरीपुत्राय । गणेश्वराय । स्कन्दाग्रजाय । अव्ययाय । पूताय । दक्षाध्यक्षाय । द्विजप्रियाय । अग्निगर्वच्छिदे ।।१०।। इन्द्रश्रीप्रदाय । वाणीबलप्रदाय । सर्वसिद्धिप्रदाय । शर्वतनयाय । शिवप्रियाय । सर्वात्मकाय । सृष्टिकर्त्रे । देवानीकार्चिताय । शिवाय । शुद्धाय ।।२०।। बुद्धिप्रियाय । शान्ताय । ब्रह्मचारिणे । गजाननाय । द्वैमातुराय । मुनिस्तुत्याय । भक्तविघ्नविनाशनाय । एकदन्ताय । चतुर्बाहवे । चतुराय ।।३०।। शक्तिसंयुताय । लम्बोदराय । शूर्पकर्णाय । हेरम्बाय ।**

**ब्रह्मवित्तमाय । कालाय । ग्रहपतये । कामिने । सोमसूर्याग्निलोचनाय । पाशाङ्कुशधराय ॥४०॥ चण्डाय । गुणातीताय । निरञ्जनाय । अकल्माषाय । स्वयंसिद्धाय । सिद्धार्चितपदाम्बुजाय । बीजपूरप्रियाय । अव्यक्ताय । वरदाय । शाश्वताय ॥५०॥ कृतिने । विद्वत्प्रियाय । वीतभयाय । गदिने । चक्रिणे । इक्षुचापधृते । अब्जोत्पलकराय । श्रीशाय । श्रीपतिस्तुतिहर्षिताय । कुलाद्रिभृते ॥६०॥ जटिने । चन्द्रचूडाय । अमरेश्वराय । नागयज्ञोपवीतिने । श्रीकण्ठाय । रामार्चितपदाय । व्रतिने । स्थूलकण्ठाय । त्रयीकर्त्रे । सामघोषप्रियाय ॥७०॥ अग्रण्याय । पुरुषोत्तमाय । स्थूलतुण्डाय । ग्रामण्ये । गणपाय । स्थिराय । वृद्धिदाय । शुभगाय । शूराय । वागीशाय ॥८०॥ सिद्धिदायकाय । दूर्वाबिल्वप्रियाय । कान्ताय । पापहारिणे । कृतागमाय । समाहिताय । वक्रतुण्डाय । श्रीपदाय । सौम्याय । भक्तकाङ्क्षितदात्रे ॥९०॥ अच्युताय । केवलाय । सिद्धिदाय । सच्चिदानन्दविग्रहाय । ज्ञानिने । मायायुताय । दान्ताय । ब्रह्मिष्ठाय । भयवर्जिताय । प्रमथदैत्यभयदाय ॥१००॥ व्यक्तमूर्तये । अमूर्तिकाय । पार्वतीशङ्करोत्सङ्गखेलनोत्सवलालसाय । समस्तजगदाधाराय । वरमूषकवाहनाय । हृष्टचित्ताय । प्रसन्नात्मने । ॐ सर्वसिद्धिप्रदायकाय नमः ॥१०८॥**

धूपः- **ॐ अश्श्वस्य त्त्वा व्वृष्ण्णः शक्क्ना धूपयामि देवयजने पृथिव्व्याः । मखाय त्त्वा मखस्य त्त्वा शीर्ष्ष्णे ॥** दीपः- **ॐ चन्द्रमाऽअप्प्स्वन्तरा सुपर्ण्णो धावते दिवि । रयिम्पिशङ्गम्बहुलम् पुरुस्पृहग्गूंहरिरेति कनिक्क्रदत् ॥** नैवेद्यम्- **ॐ अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्रप्र दातारन्तारिषऽऊर्ज्जन्नो धेहि द्विपदे चतुष्पदे ॥** गायत्र्या सम्प्रोक्ष्य धेनुमुद्रयाऽमृतीकृत्य ग्रासमुद्रया पञ्चप्राणाहुतीर्दद्यात् । **ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ समानाय स्वाहा । ॐ उदानाय स्वाहा ।** नैवेद्यं निवेदयामि । पूर्वापोशनम् । मध्ये पानीयम् । उत्तरापोशनम् । हस्तप्रक्षालनम् । मुखप्रक्षालनम् । आचमनीयम् । करोद्वर्तनार्थे गन्धम् । मुखवासार्थे ताम्बूलम्- **ॐ उत स्म्मास्य द्द्रवतस्तुरण्ण्यतः पर्ण्णन्न वेरनुवाति प्प्रगर्द्धिनः । श्श्येनस्येव ध्ध्रजतोऽअङ्कसम्परि दधिक्क्राव्व्णः**





**सहोर्ज्जा तरित्रतः स्वाहा ॥** फलम्- **ॐ याः फलिनीर्य्याऽअफलाऽ अपुष्पा याश्च्च पुष्प्पिणीः । बृहस्पतिप्प्रसूतास्ता नो मुञ्चन्त्वग्गूंहसः ॥** दक्षिणा- **ॐ यद्दत्तँय्यत्त्परादानँय्यत्त्पूर्त्तँय्याश्च्च दक्षिणाः । तदग्निर्व्वैश्श्वकर्म्मणः स्वर्द्देवेषु नो दधत् ॥** कर्पूरारार्तिक्यम्- **ॐ आ रात्रि पार्त्थिवग्गूंरजः पितुरप्प्रायि धामभिः । दिवः सदाग्गुँसि बृहती व्वितिष्ठ्ठसऽआ त्त्वेषं व्वर्त्तते तमः ॥** मन्त्रपुष्पाञ्जलिः- **ॐ नमो गणेब्भ्यो गणपतिब्भ्यश्च्च वो नमो नमो व्व्रातेब्भ्यो व्व्रातपतिब्भ्यश्च्च वो नमो नमो गृत्त्सेब्भ्यो गृत्त्सपतिब्भ्यश्च्च वो नमो नमो व्विरूपेब्भ्यो व्विश्वरूपेब्भ्यश्च्च वो नमः ॥** नौमि द्विपास्यं गणराजराजं भक्तेष्टदं विघ्नहरं प्रसन्नम् । पुष्पाञ्जलिं ते प्रददामि देव पूजां गृहाणाशु नमो नमस्ते ॥ प्रदक्षिणा- **ॐ सप्प्तास्यासन्परिधयस्त्रिःसप्प्त समिधः कृताः । देवा यद्यज्ञन्तन्न्वानाऽअबद्ध्नन्पुरुषम्पशुम् ॥** विशेषार्घ्यम्- सजलं गन्धाक्षतपुष्पसहितं सनारिकेलमर्घ्यपात्रं धृत्वा विशेषार्घ्यं दद्यात् । **रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक । भक्तानामभयङ्कर्ता त्राता भव भवार्णवात् ॥ द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो । वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ॥ अनेन सफलार्घ्येण सफलोऽस्तु सदा मम ॥** प्रार्थना- **विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय । नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ॥ भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय सुखदाय सुरेश्वराय । विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमो नमस्ते ॥ नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः । नमस्ते रुद्ररूपाय करिरूपाय ते नमः ॥ विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे । भक्तप्रियाय देवाय नमस्तुभ्यं विनायक ॥ लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय । निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ त्वां विघ्नशत्रुदलनेति च सुन्दरेति भक्तप्रियेति सुखदेति वरप्रदेति ॥ विद्याप्रदेत्यघहरेति च ये स्तुवन्ति तेभ्यो गणेश वरदो भव नित्यमेव ॥** समर्पणम्- हस्ते जलमादाय । अनया पूजया साङ्गः सपरिवारः सिद्धिबुद्धिसहितः श्रीमन्महागणाधिपतिः प्रीयतां न मम ॥

## पञ्चायतनदेवतापूजनम्

(सूर्याद्युपासकैर्मध्यकोष्ठादारभ्यैशानतो वायव्यान्तं पञ्च देवताः क्रमशः स्थाप्याः । सूर्यशिवगणेशविष्णुशक्तयः । शक्तिविष्णुशिवगणेशादित्याः । गणेशविष्णुशिवसूर्यशक्तयः । विष्णुशिवगणेशसूर्यशक्तयः । शिवविष्णु-सूर्यगणेशशक्तयः)

मध्ये रक्तवर्णं सूर्यम्– **ॐ आकृष्णेन रजसा व्वर्त्तमानो निवेशयन्नमृतम्मर्त्त्यञ्च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्श्यन् ।।** ॐ भूर्भुवः स्वः सूर्याय नमः सूर्यमावाहयामि ।। ईशानकोणे श्वेतवर्णं रुद्रम्– **ॐ नमस्ते रुद्द्र मन्यवऽउतोतऽइषवे नमः । बाहुब्भ्यामुत ते नमः ।।** ॐ रुद्राय नमः ।। अग्निकोणे रक्तवर्णं गणपतिम्– **ॐ गणानान्त्वा गणपतिग्गूंहवामहे प्प्रियाणान्त्वा प्प्रियपतिग्गूंहवामहे निधीनान्त्वा निधिपतिग्गूंहवामहे व्वसो मम । आऽहमजानि गर्ब्भधमा त्त्वमजासि गर्ब्भधम् ।।** ॐ गणपतये नमः ।। नैर्ऋत्यकोणे पीतवर्णं विष्णुम्– **ॐ इदँव्विष्णुर्व्विचक्क्रमे त्त्रेधा निदधे पदम् । समूढमस्य पाग्गुंसुरे स्वाहा ।।** ॐ विष्णवे नमः ।। वायव्यकोणे रक्तवर्णां दुर्गाम्– **ॐ अम्बेऽअम्बिकेऽम्बालिके न मा नयति कश्चन । स सस्त्यश्श्वकः सुभद्द्रिकाङ्काम्पीलवासिनीम् ।।** ॐ दुर्गायै नमः ।। **'ॐ मनो जूतिरिति'** ॐ भूर्भुवः स्वः सूर्यादिपञ्चायतनदेवता आवाहिताः सुप्रतिष्ठिता वरदा भवत । इति संस्थाप्य **'ॐ भूर्भुवः स्वः सूर्यादिपञ्चायतनदेवताभ्यो नमः'** इति सम्पूज्य प्रणमेत्– **धीशं सूर्यमथाम्बिकां हरिहरौ रूपाणि पञ्चावहन् यो नित्यं सगुणः कृतार्थयति सन्मार्गानुगान् साधकान् । यो बुद्धेर्वरतेजसः क्रमगताच्छक्तेश्चितः सत्सतः साहाय्यादवधार्यते स भगवान् पञ्चात्मको नम्यते ।।** हस्ते जलं गृहीत्वा– अनेन पूजनेन सूर्यादिपञ्चायतनदेवताः प्रीयन्तां न मम ।।





## कलशस्थापनपूजनम्

भूमिस्पर्शनम्– **ॐ भूरसि भूमिरस्यदितिरसि व्विश्श्वधा या व्विश्श्वस्य भुवनस्य धर्त्री । पृथिवीँय्यच्छ पृथिवीन्दृग्गूंह पृथिवीम्मा हिग्गूंसीः ।।** धान्यानां पुञ्जकरणम्– **ॐ ओषधयः समवदन्त सोमेन सह राज्ञा । यस्मै कृणोति ब्ब्राह्मणस्त्तग्गूंराजन्पारयामसि ।।** ततः सप्तभिर्दर्भपवित्रैः कलशपवित्रीकरणम्– **ॐ चित्त्पतिर्म्मा पुनातु व्वाक्पतिर्म्मा पुनातु देवो मा सविता पुनात्त्वच्छिद्द्रेण पवित्त्रेण सूर्य्यस्य रश्श्मिभिः । तस्य ते पवित्त्रपते पवित्त्रपूतस्य यत्त्कामः पुने तच्छकेयम् ।।** कलशस्थापनम्– **ॐ आजिग्घ्र कलशम्महय्या त्त्वा व्विशन्त्विन्दवः । पुनरूर्ज्जा निवर्त्तस्व सा नः सहस्रन्धुक्क्ष्वोरुधारा पयस्वती पुनर्म्माविशताद्द्रयिः ।।** स्थिरीकरणम्– **ॐ स्थिरो भव व्वीड्ड्वङ्गऽआशुर्ब्भव व्वाज्ज्यर्व्वन् । पृथुर्ब्भव सुषदस्त्त्वमग्ग्नेः पुरीषवाहनः ।।** जलपूरणम्– **ॐ मही द्द्यौः पृथिवी च नऽइमँय्यज्ञम्मिमिक्क्षताम् । पिपृतान्नो भरीमभिः ।।** सर्वौषधिप्रक्षेपः– **ॐ याऽओषधीः पूर्व्वा जाता देवेब्भ्यस्त्रियुगम्पुरा । मनैनु बब्भ्रूणामहग्गूंशतन्धामानि सप्त च ।।** धान्यप्रक्षेपः– **ॐ व्व्रीहयश्च्च मे यवाश्च्च मे माषाश्च्च मे तिलाश्च्च मे मुद्द्गाश्च्च मे खल्ल्वाश्च्च मे प्प्रियङ्गवश्च्च मेऽणवश्च्च मे श्श्यामाकाश्च्च मे नीवाराश्च्च मे गोधूमाश्च्च मे मसूराश्च्च मे यज्ञेन कल्प्पन्ताम् ।।** दूर्वाप्रक्षेपः– ॐ **काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ।।** पञ्चपल्लवान्– **ॐ अश्श्वत्त्थे वो निषदनम्पर्ण्णे वो व्वसतिष्कृता । गोभाजऽइत्त्किलासथ यत्त्सनवथ पूरुषम् ।।** सप्तमृदः– **ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म्म सप्प्रथाः ।।** फलम्ः– **ॐ याः फलिनीर्य्याऽअफलाऽ अपुष्पायाश्च्च पुष्प्पिणीः । बृहस्पतिप्प्रसूतास्त्ता नो मुञ्चन्त्वग्गूंहसः ।।** पञ्चरत्नानि– **ॐ परिवाजपतिः कविरग्ग्निर्हव्व्यान्यक्क्रमीत् ।**

दधद्रत्क्नानि दाशुषे ।। हिरण्यम्- ॐ हिरण्यगर्ब्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत् । स दाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा व्विधेम ।। रक्तसूत्रवेष्टनम्- ॐ सुजातो ज्ज्योतिषा सह शर्म्म व्वरूथमासदत्स्वः । व्वासोऽअग्ने व्विश्श्वरूपगूंसँव्व्ययस्व व्विभावसो ।। पूर्णपात्रनिधानम्- ॐ पूर्ण्णा दर्व्वि परापत सुपूर्ण्णा पुनरापत । व्वस्नेव व्विक्क्रीणावहाऽइषमूर्ज्जगूंशतक्क्रतो ।। नालिकेरस्थापनम्- ॐ श्रीश्च्च ते लक्ष्मीश्च्च पत्क्न्यावहोरात्रे पाश्श्र्वे नक्षत्त्राणि रूपमश्श्विनौ व्व्यात्तम् । इष्णन्निषाणा-मुम्मऽइषाण सर्व्वलोकम्मऽइषाण ।। ततो गङ्गादीनामावाहनम्- ॐ इमम्मे व्वरुण श्श्रुधी हवमद्द्या च मृडय । त्वामवस्युराचके ।। ॐ पावका नः सरस्वती व्वाजेभिर्व्वाजिनीवती । यज्ञँव्वष्ट्टु धिया वसुः ।। ॐ अश्श्वावतीर्ग्गोमतीर्न्नऽउषासो व्वीरवतीः सदमुच्छन्तु भद्द्राः । घृतन्दुहाना व्विश्श्वतः प्प्रपीता यूयं पात स्वस्त्तिभिः सदा नः ।। ॐ पञ्च नद्द्यः सरस्वतीमपि यन्ति सस्रोतसः । सरस्वती तु पञ्च्धा सो देशेऽभवत्सरित् ।। वरुणावाहनम्- ॐ तत्त्वा यामि ब्ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्ब्भिः । अहेडमानो व्वरुणेह बोद्ध्युरुशग्गूंस मा नऽआयुः प्प्रमोषीः ।। गङ्गे त्वं सर्वतीर्थानामाश्रयाऽसि यतस्ततः । यजमानाभिषेकार्थमेहि पापं विनाशय ।। प्रपद्ये वरुणं देवं यादसाम्पतिमीश्वरम् । याचितं देहि मे तीर्थं सर्वपापापनुत्तये ।। ॐ वरुणाय नमः वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकम् आवाहयामि स्थापयामि । इत्यावाह्य प्रतिष्ठापयेत्- ॐ मनो जूतिर्ज्जुषतामाज्ज्यस्य बृहस्प्पतिर्य्यज्ञमिमन्तनोत्त्वरिष्ट्टँय्यज्ञग्गूं समिमन्दधातु । व्विश्श्वेदेवासऽइहमादयन्तामो।।३म्प्रतिष्ठ्ठ ।। अस्मिन् कलशे साङ्ग सायुध सवाहन सपरिवार वरुण प्रतिष्ठितो वरदो भव । 'ॐ वरुणाय नमः' इति सम्पूज्य प्रार्थनापूर्वकं नमस्कारं कुर्यात्- ॐ कुम्भो व्वनिष्ठ्ठुर्ज्जनिता शचीभिर्यस्मिन्नग्ग्रे योन्न्याङ्गर्ब्भोऽअन्तः । प्लाशिर्व्व्यक्क्तः शतधारऽउत्त्सो दुहे न कुम्भी स्वधाम्पितृब्भ्यः ।।





तीक्ष्णायुधं तीक्ष्णगतिं दिगीशं चराचरेशं वरुणं महान्तम् । प्रचण्डपाशाङ्कुशवज्रहस्तं भजामि देवं कुलवृद्धिहेतोः ।। शङ्खस्फटिकवर्णाभ श्वेतहाराम्बरावृत । पाशहस्त महाबाहो दयां कुरु दयानिधे ।। पूजानिवेदनम्- मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर । यत्पूजितं मया देव परिपूर्णं तदस्तु मे ।। अनया पूजया कलशस्थवरुणः साङ्गः सपरिवारः प्रीयतां न मम ।।

## पुण्याहवाचनम्

यज. ॐ अद्य पुण्याहं वाचयिष्ये । ब्रा. वाच्यताम् । यज. ब्राह्मं पुण्यं महर्यच्च सृष्ट्युत्पादनकारकम् । वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ।।१।। भो ब्राह्मणाः! मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्यास्य श्रीवेदव्यासपूजनकर्मणः पुण्याहं भवन्तो ब्रुवन्तु । ब्रा. अस्तु पुण्याहम् एवं त्रिः । पुनन्तु मा देवजनाः पुनन्तु मनसा धियः । पुनन्तु व्विश्श्वा भूतानि जातवेदः पुनीहि मा ।। यज. पृथिव्यामुद्धृतायां तु यत्कल्याणं पुरा कृतम् । ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः । भो ब्राह्मणाः! मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्यास्य श्रीवेदव्यासपूजनकर्मणः कल्याणं भवन्तो ब्रुवन्तु । ब्रा. अस्तु कल्याणम् एवं त्रिः । ॐ यथेमाँव्वाचङ्कल्याणीमावदानि जनेब्भ्यः । ब्रह्मराजन्याब्भ्यागुँशूद्राय चार्याय च स्वाय चारणाय च । प्रियो देवानान्दक्षिणायै दातुरिह भूयासमयम्मे कामः समृद्ध्यतामुपमादो नमतु ।। यज. सागरस्य यथावृद्धिर्महालक्ष्म्यादिभिः कृता । सम्पूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवन्तु नः । भो ब्राह्मणाः! मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणायाशीर्वचनमपेक्षमाणाय मया क्रियमाणस्य अस्य श्रीवेदव्यासपूजनकर्मणः ऋद्धिं भवन्तो ब्रुवन्तु । ब्रा. कर्म ऋद्ध्यताम् त्रिः । ॐ सत्रस्यऽऋद्धिरस्यगन्म ज्ज्योतिरमृताऽअभूम । दिवम्पृथिव्याऽअद्ध्यारुहामाविदाम देवान्स्वर्ज्योतिः ।। यज. स्वस्तिस्तु याऽविनाशाख्या पुण्यकल्याणवृद्धिदा । विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः ।। भो ब्राह्मणाः! मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय

**आशीर्वचनमपेक्षमाणाय मया क्रियमाणायास्मै श्रीवेदव्यासपूजनकर्मणे स्वस्ति भवन्तो ब्रुवन्तु ॥** ब्रा- **आयुष्मते स्वस्ति** एवं त्रिः । **ॐ स्वस्तिनऽइन्द्रो व्वृद्धश्रवाः स्वस्ति नः पूषा व्विश्ववेदाः । स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्द्धधातु ॥** यज. **समुद्रमथनाज्जाता जगदानन्दकारिका । हरिप्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः ॥ भो ब्राह्मणाः! मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणायास्मै श्रीवेदव्यासपूजनकर्मणे श्रीरस्त्विति भवन्तो ब्रुवन्तु ।** ब्रा.- **अस्तु श्रीः ।** एवं त्रिः । **ॐ मनसः काममाकूतिं व्वाचः सत्यमशीय । पशूनाग्गुँरूपमन्नस्य रसो यशः श्रीः श्रयताम्मयि स्वाहा ॥** यजमानो हस्ते जलमादाय- मया कृतेऽस्मिन् पुण्याहवचने न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनात् महागणपतिप्रसादाच्च सर्वः परिपूर्णोऽस्तु । अस्तु परिपूर्णः इति द्विजाः ।। हस्ते जलं गृहीत्वा पुण्याहवाचकेभ्यो ब्राह्मणेभ्यो दक्षिणां दद्यात्- **पुण्याहवाचकेभ्यो ब्राह्मणेभ्यो दक्षिणां दातुमहमुत्सृज्ये, तेन कर्माधीशः प्रीयताम् ॥** ततो हस्ते जलं गृहीत्वा- अनेन पुण्याहवाचनकर्मणा कर्माङ्गदेवता प्रीयतां न मम ।।

## आचार्यादिवरणम्

हस्ते जलं गृहीत्वा आचार्यादिवरणसङ्कल्पं कुर्यात्- **ॐ अद्याहमाचार्यादिवरणं करिष्ये ।** पुनर्हस्ते वरणसम्भारान् गृहीत्वा आचार्यादिवरणं कुर्यात् । तद्यथा- **ॐ अद्यामुकमासि अमुकपक्षे अमुकतिथौ अमुकगोत्रः अमुकशर्मा अस्मिन् श्रीवेदव्यासपूजनकर्मणि अमुकगोत्रममुकशर्माणं ब्राह्मणमाचार्यत्वेन त्वामहं वृणे ॥** अन्यानपि ब्राह्मणान् वृणुयात् ।। ब्राह्मणहस्ते रक्षाबन्धनं कृत्वा तान् प्रार्थयेत्- **समस्तसम्पत्समवाप्तहेतवः समुत्थितापत्कुलधूमकेतवः । अपारसंसार-समुद्रसेतवः पुनन्तु मां ब्राह्मणपादपांसवः ॥**

## नवग्रहादिस्थापनपूजनम्

ईशान्यां चतुस्त्रिंशदङ्गुलोच्चसमचतुरस्रस्य ग्रहपीठस्य समीपे सपत्नीको यजमानः पूर्वाभिमुख उपविश्य आचमनं प्राणायामञ्च कृत्वा वामहस्ते अक्षतान् गृहीत्वा दक्षहस्तेन तत्तस्थाने आदित्यादिदेवतानाम् आवाहनं कुर्यात् । तद्यथा । मध्ये वर्तुले प्राङ्मुखं सूर्यम्- **ॐ आकृष्णेन रजसा व्वर्त्तमानो निवेशयन्नमृतं मर्त्त्यञ्च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥** ॐ भूर्भुवः स्वः सूर्याय नमः सूर्यमावाहयामि स्थापयामि ॥१॥ आग्नेय्यां दिशि चतुरस्रे प्रत्यङ्मुखं चन्द्रम्- **ॐ इमन्देवाऽअसपत्नग्गूंसुवद्ध्वम्महते क्षत्राय महते ज्ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय । इमममुष्य पुत्रममुष्यै पुत्रमस्यै व्विशऽएष वोऽमी राजा सोमोऽस्माकम्ब्राह्मणा-नाग्गुँराजा ॥** ॐ सोमाय नमः ॥२॥ दक्षिणस्यां दिशि त्रिकोणे दक्षिणाभिमुखं भौमम्- **ॐ अग्निर्म्मूर्द्धा दिवः ककुत्पतिः पृथिव्याऽअयम् । अपाग्गुँरेताग्गुँसि जिन्वति ॥** ॐ भौमाय नमः ॥३॥ ईशान्यां दिशि बाणाकारे उदङ्मुखं बुधम्- **ॐ उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सग्गूंसृजेथामयञ्च । अस्मिन्त्सधस्थेऽ-अध्युत्तरस्मिन्विश्वेदेवा यजमानश्च सीदत ॥** ॐ बुधाय नमः ॥४॥ उत्तरस्यां दिशि दीर्घचतुरस्रे पट्टाकारे उदङ्मुखं बृहस्पतिम्- **ॐ बृहस्पतेऽअति यदर्य्योऽअर्हा द्द्युमद्विभाति क्क्रतुमज्जनेषु । यद्दीदयच्छ वसऽऋत प्प्रजात तदस्मासु द्द्रविणन्धेहि चित्रम् ॥** ॐ बृहस्पतये नमः ॥५॥ पूर्वस्यां दिशि पञ्चकोणे प्राङ्मुखं शुक्रम्- **ॐ अन्नात्परिस्रुतो रसम्ब्रह्मणा व्यपिबत्क्षत्रम्पयः सोमम्प्रजापतिः । ऋतेन सत्यमिन्द्रियँव्विपानग्गूं शुक्क्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोऽ-मृतम्मधु ॥** ॐ शुक्राय नमः ॥६॥ पश्चिमायां दिशि धनुषाकारे प्रत्यङ्मुखं शनैश्चरम्- **ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु प्रीतये ।**

**शँय्योरभिस्रवन्तु नः** ॥ ॐ शनैश्चराय नमः । ॥७॥ नैर्ऋत्यां दिशि शूर्पाकारे दक्षिणाभिमुखं राहुम्- **ॐ कया नश्चित्रऽआभुव दूती सदावृधः सखा । कया शचिष्ठ्ठयावृता** ॥ ॐ राहवे नमः ॥८॥ वायव्यां दिशि ध्वजाकारे दक्षिणाभिमुखं केतुम्- **ॐ केतुं कृण्वन्न केतवे पेशोमर्य्याऽअपेशसे । समुषद्भिरजायथाः** ॥ ॐ केतवे नमः ॥९॥

**ग्रहदक्षिणपार्श्वेऽधिदेवतास्थापनम्** । सूर्यदक्षिणपार्श्वे ईश्वरम्- **ॐ त्र्यम्बकँय्यजामहे सुगन्धिम्पुष्टिवर्द्धनम् । उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्** ॥ ॐ ईश्वराय नमः ॥१०॥ सोमदक्षिणपार्श्वे उमाम्- **ॐ श्रीश्च्च ते लक्ष्मीश्च्च पत्क्न्यावहोरात्रे पाश्र्वे नक्षत्राणि रूपमश्श्विनौ व्यात्तम् । इष्ष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण** ॥ ॐ उमायै नमः ॥११॥ भौमदक्षिणपार्श्वे स्कन्दम्- **ॐ यदक्क्रन्दः प्प्रथमं जायमानऽउद्द्यन्त्समुद्रादुतवा पुरीषात् । श्येनस्य पक्क्षा हरिणस्य बाहूऽउपस्तुत्त्यम्महिजातन्तेऽ-अर्व्वन्** ॥ ॐ स्कन्दाय नमः ॥१२॥ बुधदक्षिणपार्श्वे विष्णुम्- **ॐ व्विष्ष्णो रराटमसि व्विष्ष्णोः श्श्नप्त्रेस्थो व्विष्ष्णोः स्यूरसि व्विष्ष्णोर्द्ध्रुवोऽसि । व्वैष्ष्णवमसि व्विष्ष्णवे त्त्वा** ॥ ॐ विष्णवे नमः ॥१३॥ गुरुदक्षिणपार्श्वे ब्रह्माणम्- **ॐ आ ब्रह्म्मन्ब्राह्म्मणो ब्ब्रह्म्मवर्च्चसी जायतामा राष्ट्ट्रे राजन्यः शूरऽइषव्योऽतिव्याधी महारथो जायतान्दोग्ध्री धेनुर्वोढानड्ड्वानाशुः सप्प्तिः पुरन्धिर्योषा जिष्ष्णू रथेष्ट्ठाः सभेयो युवास्य यजमानस्य व्वीरो जायतान्निकामे निकामे नः पर्ज्जन्यो व्वर्षतु फलवत्यो नऽओषधयः पच्यन्ताँय्योगक्षेमो नः कल्प्पताम्** ॥ ॐ ब्रह्मणे नमः ॥१४॥ शुक्रदक्षिणपार्श्वे इन्द्रम्- **ॐ सजोषाऽइन्द्र सगणो मरुद्भिः सोमम्पिब व्वृत्त्रहा शूर व्विद्वान् । जहि शत्रूँ१ऽरपमृदो नुदस्वाथाभयं कृणुहि व्विश्श्वतो मुखः** ॥ ॐ इन्द्राय नमः ॥१५॥ शनिदक्षिणपार्श्वे यमम्- **ॐ यमाय त्त्वाऽऽङ्गिरस्वते**





**पितृमते स्वाहा । स्वाहा घर्म्माय स्वाहा घर्म्मः पित्रे** ॥ ॐ यमाय नमः ॥१६॥ राहुदक्षिणपार्श्वे कालम्- **ॐ कार्षिरसि समुद्रस्य त्त्वा क्षित्त्याऽउन्नयामि । समापोऽअद्भिरग्मत समोषधीभिरोषधीः** ॥ ॐ कालाय नमः ॥१७॥ केतुदक्षिणपार्श्वे चित्रगुप्तम्- **ॐ चित्त्रावसो स्वस्त्ति ते पारमशीय** ॥ ॐ चित्रगुप्ताय नमः ॥१८॥

**ग्रहवामपार्श्वे प्रत्यधिदेवतास्थापनम्** । सूर्यवामपार्श्वे अग्निम्- **ॐ अग्ग्निन्दूतम्पुरोदधे हव्व्यवाहमुपब्रुवे । देवाँ२॥ आसादयादिह** ॥ ॐ अग्नये नमः ॥१९॥ सोमवामपार्श्वे अपः- **ॐ आपो हि ष्ट्ठा मयोभुवस्ता नऽऊर्ज्जे दधातन । महेरणाय चक्क्षसे** ॥ ॐ अद्भ्यो नमः ॥२०॥ भौमवामपार्श्वे पृथिवीम्- **ॐ स्योना पृथिवि नो भवा नृक्क्षरा निवेशनी । यच्छा नः शर्म्म सप्प्रथाः** ॥ ॐ पृथिव्यै नमः ॥२१॥ बुधवामपार्श्वे विष्णुम्- **ॐ इदँव्विष्ष्णुर्विचक्क्रमे त्त्रेधा निदधे पदम् । समूढमस्य पाग्गुँसुरे स्वाहा** ॥ ॐ विष्णवे नमः ॥२२॥ गुरुवामपार्श्वे इन्द्रम्- **ॐ त्रातारमिन्द्रमवितारमिन्द्रग्गूंहवे हवे सुहवग्गूंशूरमिन्द्रम् । हवयामि शक्क्रम्पुरुहूतमिन्द्रग्गुँस्वस्त्ति नो मघवा धात्त्विन्द्रः** ॥ ॐ इन्द्राय नमः ॥२३॥ शुक्रवामपार्श्वे इन्द्राणीम्- **ॐ अदित्यै रास्नासीन्द्राण्ण्याऽ उष्ष्णीषः । पूषाऽसि घर्म्माय दीष्ष्व** ॥ ॐ इन्द्राण्यै नमः ॥२४॥ शनिवामपार्श्वे प्रजापतिम्- **ॐ प्प्रजापते न त्त्वदेतान्यन्यो व्विश्श्वा रूपाणि परिता सम्बभूव । यत्कामास्ते जुहुमस्तन्नोऽअस्तु व्वयग्गुँस्याम पतयो रयीणाम्** ॥ ॐ प्रजापतये नमः ॥२५॥ राहुवामपार्श्वे सर्पान्- **ॐ नमोऽस्तु सर्प्पेब्भ्यो ये के च पृथिवीमनु । येऽअन्तरिक्षे ये दिवि तेब्भ्यः सर्प्पेब्भ्यो नमः** ॥ ॐ सर्पेभ्यो नमः ॥२६॥ केतुवामपार्श्वे ब्रह्माणम्- **ॐ ब्रह्म्म जज्ज्ञानम्प्रथमम्पुरस्त्ताद् व्विसीमतः सुरुचो व्वेनऽआ वः । स बुध्न्याऽउपमाऽअस्य व्विष्ठाः सतश्च योनिमसतश्च व्विवः** ॥ ॐ ब्रह्मणे नमः ॥२७॥

**पञ्चलोकपालस्थापनम्** । राहोरुत्तरतो गणपतिम्- **ॐ गणानान्त्वा गणपतिग्गूंहवामहे प्प्रियाणान्त्वा प्रियपतिग्गूंहवामहे निधीनान्त्वा निधिपतिग्गूंहवामहे व्वसो मम ॥ आहमजानि गर्ब्भधमात्वमजासि गर्ब्भधम् ॥** ॐ गणपतये नमः ॥२८॥ शनेरुत्तरतो दुर्गाम्- **ॐ अम्बेऽअम्बिकेऽम्बालिके न मा नयति कश्चन । ससस्त्यश्श्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥** ॐ दुर्गायै नमः ॥२९॥ रवेरुत्तरतो वायुम्- **ॐ व्वायो ये ते सहस्रिणो रथासस्तेभिरागहि । नियुत्वान्त्सोमपीतये ॥** ॐ वायवे नमः ॥३०॥ राहोर्दक्षिणे आकाशम्- **ॐ घृतङ्घृतपावानः पिबत व्वसाँव्वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा । दिशः प्रदिशऽआदिशो व्विदिशऽउद्दिशो दिग्ग्भ्यः स्वाहा ॥** ॐ आकाशाय नमः ॥३१॥ केतुदक्षिणे अश्विनौ- **ॐ यावाङ्कशा मधुमत्त्यश्श्विना सूनृतावती । तया यज्ञम्मिमिक्षतम् ॥** ॐ अश्विभ्यां नमः ॥३२॥

**क्षेत्राधिपतेर्वास्तोष्पतेर्दशदिक्पालानां च स्थापनम्** । गुरोरुत्तरे क्षेत्राधिपतिम्- **ॐ नहि स्प्पशमविदन्नन्यमस्माद् व्वैश्वानरात्पुरऽ एतारमग्नेः । एमेनमवृधन्नमृताऽअमर्त्त्यं व्वैश्श्वानरं क्षैत्रजित्त्याय देवाः ॥** ॐ क्षेत्राधिपतये नमः ॥३३॥ तदुत्तरे वास्तोष्पतिम्- **ॐ व्वास्तोष्प्पते प्रतिजानीह्यस्मान्त्वेशोऽअनमीवो भवा नः । यत्त्वेमहे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शञ्चतुष्प्पदे ॥** ॐ वास्तोष्पतये नमः ॥३४॥ ग्रहमण्डलाद्बहिः पूर्वस्याम् इन्द्रम्- **ॐ त्रातारमिन्द्रम-वितारमिन्द्रग्गूंहवे हवे सुहवग्गूंशूरमिन्द्रम् । हवयामि शक्क्रम्पुरुहूत-मिन्द्रग्गुँस्वस्ति नो मघवा धात्त्विन्द्रः ॥** ॐ इन्द्राय नमः ॥३५॥ मण्डलाद्बहिराग्नेय्याम् अग्निम्- **ॐ त्वन्नोऽअग्ग्ने तव देव पायुभिर्म्मघोनो रक्ष तन्वश्च व्वन्द्य । त्राता तोकस्य तनये गवामस्य निमेषग्गूंरक्षमाणस्तव व्व्रते ॥** ॐ अग्नये नमः ॥३६॥ मण्डलाद्बहिर्दक्षिणस्यां यमम्- **ॐ यमाय त्त्वाऽऽङ्गिरस्वते पितृमते**





**स्वाहा । स्वाहा घर्म्माय स्वाहा घर्म्मः पित्त्रे ॥** ॐ यमाय नमः ॥३७॥ मण्डलाद्बहिर्नैर्ऋत्यां निर्ऋतिम्- **ॐ असुन्वन्तमयजमानमिच्छस्तेन स्येत्यामन्विहि तस्करस्य । अन्यमस्मदिच्छ सातऽइत्त्या नमो देवि निर्ऋते तुब्भ्यमस्तु ॥** ॐ निर्ऋतये नमः ॥३८॥ मण्डलाद्बहिः पश्चिमायां वरुणम्- **ॐ तत्त्वा यामि ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्ब्भिः । अहेडमानो व्वरुणेह बोद्ध्युरुशग्गूंसमानऽआयुः प्रमोषीः ॥** ॐ वरुणाय नमः ॥३९॥ मण्डलाद्बहिर्वायव्यां वायुम्- **ॐ आ नो नियुद्भिः शतिनीभिरद्ध्वरग्गूंसहस्रिणीभिरुपयाहि यज्ञम् ॥ व्वायोऽअस्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिः सदा नः ॥** ॐ वायवे नमः ॥४०॥ मण्डलाद्बहिरुत्तरस्यां सोमम्- **ॐ व्वयग्गूंसोम व्व्रते तव मनस्तनूषु बिब्भ्रतः । प्रजावन्तः सचेमहि ॥** ॐ सोमाय नमः ॥४१॥ मण्डलाद्बहिरीशान्याम् ईशानम्- **ॐ तमीशानं जगतस्तस्स्थुषस्पतिन्धियञ्जिन्वमवसे हूमहे व्वयम् । पूषा नो यथा व्वेद साम सद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥** ॐ ईशानाय नमः ॥४२॥ मण्डलाद्बहिरीशानपूर्वयोर्मध्ये ऊर्ध्वायां ब्रह्माणम्- **ॐ अस्म्मे रुद्द्रा मेहना पर्वतासो व्वृत्रहत्त्ये भरहूतौ सजोषाः । यः शग्गूंसते स्तुवते धायि पज्ज्रऽइन्द्र ज्येष्ठाऽअस्मा२ँऽअवन्तु देवाः ॥** ॐ ब्रह्मणे नमः ॥४३॥ मण्डलाद्बहिर्नैर्ऋत्यपश्चिमयोर्मध्येऽधः अनन्तम्- **ॐ स्योना पृथिवि नो भवा नृक्षरा निवेशनी । यच्छा नः शर्म्म सप्प्रथाः ॥** ॐ अनन्ताय नमः ॥४४॥ **प्रतिष्ठापनम्- ॐ मनोजूतिर्ज्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टँय्यज्ञग्गूंस-मिमन्दधातु । व्विश्वेदेवासऽइह मादयन्तामों३॥प्रतिष्ठ ॥** ॐ भूर्भुवः स्वः सूर्याद्यावाहितग्रहमण्डलदेवताः सुप्रतिष्ठिता वरदा भवत ॥ इति प्रतिष्ठाप्य पूर्वतः **कलशस्थापनं** कुर्यान्न वा । ततो ध्यायेत्- **ॐ ग्रहाऽऊर्ज्जाहुतयो व्यन्तो व्विप्प्राय मतिम् । तेषाँव्विशिप्प्रियाणाँव्वोऽ-हमिषमूर्ज्जग्गूं समग्रभमुपयाम गृहीतोऽसीन्द्राय त्त्वाजुष्टङ्गृह्णाम्येष ते**

**योनिरिन्द्राय त्त्वा जुष्ट्टतमम् ।। ॐ भूर्भुवः स्वः सूर्याद्यावाहितग्रह-मण्डलदेवताभ्यो नमः** इति प्रत्येकं तत्तद्वर्णयुक्तगन्धपुष्प-धूपदीपनैवेद्यताम्बूलदक्षिणादिभिः सम्पूज्य ग्रहवेदीसमीपे भूमौ पूर्वोक्तनाममन्त्रैर्बलीन्दद्यात् । तद्यथा । सूर्याय गुडौदनम् । सोमाय घृतपायसम् । कुजाय मसूरान्नम् । बुधाय क्षीरौदनम् । गुरवे दध्योदनम् । शुक्राय घृतौदनम् । शनैश्चराय तिलपिष्टम् । राहवे तिलमाषान्नम् । केतवे चित्रौदनम् । अन्येभ्यः पाायसबलीन्दत्वा प्रार्थयेत् । **आयुश्च वित्तं च तथा सुखं च धर्मार्थलाभौ बहुपुत्रतां च । शत्रुक्षयं राजसु पूज्यतां च तुष्टा ग्रहाः क्षेमकरा भवन्तु ।।** ॐ भूर्भुवः स्वः सूर्याद्यावाहितग्रहमण्डलदेवताभ्यो नमः प्रार्थनापूर्वकं नमस्कारान् समर्पयामि ।। पूजानिवेदनम् । हस्ते जलं गृहीत्वा । अनेन पूजनकर्मणा सूर्याद्यावाहितग्रहमण्डलदेवताः प्रीयन्तां न मम ।।

## असङ्ख्यातरुद्रपूजनम्

तत ईशान्यां ग्रहसम्बन्धिरुद्रकलशं स्थापयेत् '**ॐ महीद्यौरित्यादि**' मन्त्रैः पूर्ववत् संस्थाप्य तत्र ''**ॐ तत्त्वामीति**'' वरुणमावाह्य सम्पूज्य '**कलशस्य मुखे विष्णुरिति**' अभिमन्त्र्य '**देवदानवसंवादे**' इत्यादि प्रार्थयेत् । ततस्तदुपरि **ॐ असङ्ख्याता सहस्राणि ये रुद्द्राऽअधिभूम्म्याम् । तेषाग्गुँसहस्रयोजनेऽवधन्वानि तन्मसि ।।** असङ्ख्यातरुद्रानावाहयामि पूजयामि । इत्यावाह्य प्रतिष्ठापयेत्- **ॐ मनोजूतिर्ज्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्त-नोत्वरिष्टँ य्यज्ञग्गूंसमिमन्दधातु । विश्श्वेदेवासऽइह मादयन्तामों३।। प्रतिष्ठ ।।** असङ्ख्यातरुद्रा आवाहिताः सुप्रतिष्ठिता वरदा भवत । **ॐ भूर्भुवः स्वः असङ्ख्यातरुद्रेभ्यो नमः ।** इति षोडशोपचारैः पूजयेत् । अनेनार्चनेन असंख्यातरुद्राः प्रीयन्तां न मम । (अनेन कलशोद-केनाभिषेकसमये पत्न्या सह यजमानमभिषिञ्चेत्) ।।





## सर्वतोभद्रमण्डलदेवतास्थापनपूजनम्

अक्षतान् गृहीत्वाऽऽवाहनं कुर्यात् । तत्र मध्ये कर्णिकायां ब्रह्माणम्- **ॐ ब्रह्म जज्ञानम्प्रथमम्पुरस्ताद्व्विसीमतः सुरुचो व्वेनऽआवः । स बुद्ध्न्याऽउपमाऽअस्यव्विष्ठाः सतश्च्च योनिमसतश्च्च व्विवः ।। नमः कमलपत्राक्ष नमस्ते पद्मजन्मने । नमः सुरासुरगुरो कारिणे परमात्मने ।।** ॐ भूर्भुवः स्वः ब्रह्मणे नमः ब्रह्माणमावाहयामि स्थापयामि ।।१।। तत उत्तरे वायव्यां सोमम्- **ॐ व्वयग्गूंसोम व्व्रते तव मनस्तनूषु बिब्भ्रतः । प्रजावन्तः स चेमहि ।।** ॐ सोमाय नमः ।।२।। तत ईशान्यां खण्डेन्दावीशानम्- **ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहे व्वयम् । पूषा नो यथा व्वेद साम सद्वृधे रक्क्षिता पायुरदब्धः स्वस्तये ।।** ॐ ईशानाय नमः ।।३।। ततः पूर्वस्यां वाप्यामिन्द्रम्- **ॐ त्रातारमिन्द्रमवितार-मिन्द्रग्गूंहवे हवे सुहवग्गूंशूरमिन्द्रम् । ह्वयामि शक्क्रम्पुरुहूतमिन्द्रग्गुँ स्वस्ति नो मघवा धात्विन्द्रः ।।** ॐ इन्द्राय नमः ।।४।। तत आग्नेय्यां खण्डेन्दावग्निम्- **ॐ त्वन्नोऽअग्ग्ने व्वरुणस्य व्विद्वान्देवस्य हेडोऽव यासि सीष्ठाः । यजिष्ट्ठो व्वह्निनतमः शोशुचानो व्विश्श्वा द्वेषाग्गुँसि प्र मुमुग्ध्यस्मत् ।।** ॐ अग्नये नमः ।।५।। ततो दक्षिणे वाप्यां यमम्- **ॐ सुगन्नु पन्थाम्प्रदिशन्नऽएहि ज्योतिष्मध्ये ह्यजरन्नऽ आयुः । अपैतु मृत्युममृतम्मऽआगाद्वैवस्वतो नोऽअभयं कुरु ।।** ॐ यमाय नमः ।।६।। ततो नैर्ऋत्यां खण्डेन्दौ निर्ऋतिम्- **ॐ असुन्वन्तम यजमानमिच्छस्तेन स्येत्यामन्विहि तस्क्करस्य । अन्यमस्मदिच्छ सातऽइत्त्या नमो देवि निर्ऋते तुब्भ्यमस्तु ।।** ॐ निर्ऋतये नमः ।।७।। ततः पश्चिमे वाप्यां वरुणम्- **ॐ तत्त्वा यामि ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्ब्भिः । अहेड मा नो व्वरुणेह बोद्ध्युरुशग्गूंसमानऽआयुः प्प्रमोषीः ।।** ॐ वरुणाय नमः ।।८।। ततो वायव्यां खण्डेन्दौ वायुम्- **ॐ आ नो नियुद्भिः**

**शतिनीभिरद्ध्वरग्गूं सहस्रिणीभिरुपयाहि यज्ञम् । व्वायोऽअस्मि-न्त्सदने मादयस्व यूयम्पात स्वस्तिभिः सदा नः ॥** ॐ वायवे नमः ।।९।। ततो वायुसोमयोर्मध्ये भद्रे अष्टवसून्- **ॐ व्वसोः पवित्त्रमसि शतधारँव्वसोः पवित्त्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु व्वसोः पवित्त्रेण शतधारेण सुप्प्वा कामधुक्क्षः ॥** ॐ अष्टवसुभ्भ्यो नमः ।।**१०**।। ततः सोमेशानयोर्मध्ये भद्रे एकादशरुद्रान्- **ॐ नमस्ते रुद्द्र मन्यवऽउतोतऽइषवे नमः । बाहुब्भ्यामुत ते नमः ॥** ॐ एकादशरुद्रेभ्यो नमः ।।**११**।। तत ईशानपूर्वयोर्मध्ये भद्रे द्वादशादित्यान्- **ॐ अदितिर्द्यौरदितिरन्तरिक्षम-दितिर्म्माता स पिता स पुत्रः । व्विश्श्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्त्वम् ॥** ॐ द्वादशादित्येभ्यो नमः ।।**१२**।। तत इन्द्राग्न्योर्मध्ये भद्रे अश्विनौ- **ॐ अश्श्विना तेजसा चक्क्षुः प्प्राणेन सरस्वती व्वीर्य्यम् । व्वाचेन्द्रो बलेनेन्द्राय दधुरिन्द्रियम् ॥** ॐ अश्विभ्यां नमः ।।**१३**।। ततः अग्नियमयोर्मध्ये भद्रे विश्वेदेवान्- **ॐ व्विश्श्वेदेवासऽआगत शृणुतामऽइमग्गूंहवम् । एदम्बर्हिर्निषीदत । उपयाम गृहीतोऽसि व्विश्श्वेब्भ्यस्त्वा देवेब्भ्यऽएष ते योनिर्व्विश्श्वेब्भ्यस्त्वा देवेब्भ्यः ॥** ॐ विश्वेभ्यो देवेभ्यो नमः ।। तत्रैव पितॄन्- **ॐ आयन्तु नः पितरः सोम्म्यासोऽग्निष्ष्वात्ताः पथिभिर्द्देवयानैः । अस्म्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेवन्त्वस्म्मान् ॥** ॐ पितृभ्यो नमः ।।**१४**।। ततो यम निर्ऋत्योर्मध्ये भद्रे सप्तयक्षान्- **ॐ अभित्त्यन्देवग्गूंसवितारमोण्ण्योः कविक्क्रतु-मर्च्चामि सत्यसवग्गूं रत्क्नधामभिप्प्रियम्मतिङ्क्कविम् । ऊर्द्ध्वा यज्ञस्यामतिर्भाऽअदिद्युतत्सवीमनि हिरण्ण्यपाणिरमिमीत युक्क्रतुः कृपास्स्वः । प्रजाब्भ्यस्त्वा प्रजास्त्वाऽनुप्राणन्तु प्राणतप्रजा-स्त्वमनुप्राणिहि ॥** ॐ सप्तयक्षेभ्यो नमः ।।**१५**।। ततो निर्ऋतिवरुणयोर्मध्ये भद्रे भूतनागान्- **ॐ भूताय त्त्वा नारातये**





**स्वरभिविक्ख्येषन्दृग्गूंहन्तान्दुर्य्याः पृथिव्व्यामुर्व्वन्तरिक्षमन्न्वेमि पृथिव्व्यास्त्वा नाभौ सादयाम्म्यदित्त्याऽउपस्त्थेऽग्ग्ने हव्व्यग्गूंरक्ष ॥** ॐ भूतनागेभ्यो नमः ।। तत्रैव सर्पान्- **ॐ नमोऽस्तु सर्प्पेब्भ्यो ये के च पृथिवीमनु । येऽअन्तरिक्क्षे ये दिवि तेब्भ्यः सर्प्पेब्भ्यो नमः ॥** ॐ सर्प्पेभ्यो नमः ।।**१६**।। ततो वरुणवाय्वोर्मध्ये भद्रे गन्धर्वान्- **ॐ गन्धर्व्वस्त्वा व्विश्श्वावसुः परि दधातु व्विश्श्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्ग्निरिडऽईडितः । इन्द्रस्य बाहुरसि दक्क्षिणो व्विश्श्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्ग्निरिडऽईडितः ॥ मित्त्रावरुणौ त्त्वोत्तरतः परिधत्तान्ध्रुवेण धर्म्मणा व्विश्श्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्ग्निरिडऽईडितः ॥** ॐ गन्धर्वेभ्यो नमः ।। तत्रैवाप्सरसः- **ॐ अयम्पुरो हरिकेशः सूर्य्यरश्मिम्मस्तस्य रथगृत्त्सश्च्च रथौजाश्च्च सेनानीग्ग्रामण्ण्यौ । पुञ्जिकस्त्थला च क्क्रतुस्त्थला चाप्प्सरसौदङ्क्ष्णवः । पशवो हेतिः पौरुषेयो व्वधः प्प्रहेतिस्त्तेब्भ्यो नमोऽअस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्द्विष्म्मो यश्च्च नो द्द्वेष्ट्टि तमेषाञ्जम्भे दद्ध्मः ॥** ॐ अप्सरोभ्यो नमः ।।१७।। ततः ब्रह्मसोमयोर्मध्ये वाप्यां स्कन्दम्- **ॐ यदक्क्रन्दः प्रथमञ्जायमानऽउद्यन्त्समुद्द्रादुतवा पुरीषात् । श्येनस्य पक्षा हरिणस्य बाहूऽउपस्तुत्यम्महि जातन्तेऽअर्वन् ॥** ॐ स्कन्दाय नमः ।।१८।। तदुत्तरतो नन्दीश्वरम्- **ॐ आशुः शिशानो व्वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् । सङ्क्रन्दनो निमिषऽएकवीरः शतग्गूंसेनाऽअजयत्त्साकमिन्द्रः ॥** ॐ नन्दीश्वराय नमः ।।**१९**।। तदुत्तरतः शूलमहाकालौ- **ॐ कार्षिरसि समुद्द्रस्य त्त्वा क्षित्त्याऽउन्नयामि । समापोऽअद्द्भिरग्ग्मत समोषधीभिरोषधीः ॥** ॐ शूलमहाकालाभ्यां नमः ।।**२०**।। ततो ब्रह्मेशानयोर्मध्ये वल्लीषु दक्षादीन् सप्तप्रजापतीन्- **ॐ प्प्रजापते न त्त्वदेतान्न्यन्न्यो व्विश्श्वा रूपाणि परिता बभूव । यत्त्कामास्ते जुहुमस्तन्नोऽअस्त्वयममुष्य**

**पितासावस्य पिता व्वयग्गुँस्याम पतयो रयीणाग्गुँस्वाहा ॥** ॐ दक्षादिसप्तप्रजापतिभ्यो नमः ।।२१।। ततो ब्रह्मेन्द्रयोर्मध्ये वाप्यां दुर्गाम्- **ॐ प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा । अम्बेऽअम्बिकेऽम्बालिके न मा नयति कश्चन । स सस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥** ॐ दुर्गायै नमः ।।२२।। ततस्तदुत्तरे विष्णुम्- **ॐ इदँव्विष्णुर्व्विचक्क्रमे त्रेधा निदधे पदम् । समूढमस्य पाग्गुँसुरे स्वाहा ॥** ॐ विष्णवे नमः ।।२३।। ततो ब्रह्माग्न्योर्मध्ये वल्लीषु स्वधासहितपितॄन्- **ॐ उदीरतामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः । असुँय्यऽईयुरवृकाऽऋतज्ज्ञास्ते नोऽवन्तु पितरो हवेषु ॥** ॐ स्वधासहितपितृभ्यो नमः ।।२४।। ततो ब्रह्मयमयोर्मध्ये वाप्यां मृत्युरोगौ- **ॐ परम्मृत्त्योऽअनुपरेहि पन्था यस्तेऽअन्यऽइतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्प्रजाग्गुँरीरिषो मोत व्वीरान् ॥** ॐ मृत्युरोगाभ्यां नमः ।।२५।। ततो ब्रह्मनिर्ऋत्योर्मध्ये वल्लीषु गणपतिम्- **ॐ गणानान्त्वा॰ ॥** ॐ गणपतये नमः ।।२६।। ततो ब्रह्मवरुणयोर्मध्ये वाप्याम् अपः- **ॐ अपोऽअद्द्यान्वचारिषग्गूंरसेन समसृक्ष्महि । पयस्वानग्नऽआगमन्तम्मासग्गूंसृज व्वर्च्चसा प्प्रजया धनेन च ॥** ॐ अद्भ्यो नमः ।।२७।। ततो ब्रह्मवायुमध्ये वल्लीषु मरुतः- **ॐ बृहदिन्द्राय गायत मरुतो व्वृत्रहन्तम् । येन ज्योतिरजनयन्नृतावृधो देवन्देवाय जागृवि ॥** ॐ मरुद्भ्यो नमः ।।२८।। ततो ब्रह्मणः पादमूले कर्णिकाधः पृथिवीम्- **ॐ मही द्द्यौः पृथिवी च नऽइमँय्यज्ञम्मिमिक्षताम् । पिपृतान्नो भरीमभिः ॥** ॐ पृथिव्यै नमः ।।२९।। ततस्तत्रैव तदुत्तरतो गङ्गादिसप्तनदीः- **ॐ इमम्मे व्वरुण श्श्रुधी हवमद्द्या च मृडय । त्वामवस्युराचके ॥** ॐ गङ्गादिनदीभ्यो नमः ।।३०।। ततस्तत्रैव तदुत्तरतः सप्तसागरान्- **ॐ मापोमौषधीर्हिग्गूंसीर्द्धाम्नो धाम्नो राजँस्ततो व्वरुण नो मुञ्च । यदाहुरघ्न्याऽइति व्वरुणेति शपामहे ततो व्वरुण नो मुञ्च ॥**





ॐ सप्तसागरेभ्यो नमः ।।३१।। ततः कर्णिकोपरि मेरुम्- **एह्येहि कार्त्तस्वररूप सर्वभूभृत्पते चन्द्ररवी दधान । सर्वौषधिस्थान महेन्द्रमित्र लोकत्रयावास नमोऽस्तु तुभ्यम् ॥** ॐ मेरवे नमः ।।३२।। ततो मण्डलाद्बहिरुत्तरे श्वेतपरिधौ गदाम्- **निषिक्ताकुमुदाक्षस्य नाम्ना कौमोदकी गदा । शान्तिदा स्मरणादेव तस्यै तुभ्यं नमो नमः ॥** ॐ गदायै नमः ।।३३।। तत ऐशान्यां त्रिशूलम्- **महायोगीन्द्रहस्तस्य शङ्करस्य प्रियङ्कर । त्रिशूल त्वमिहागच्छ पूजेयं प्रतिगृह्यताम् ॥** ॐ त्रिशूलाय नमः।।३४।। ततः पूर्वे वज्रम्- **तप्तकाञ्चनवर्णाभं वज्रं वै शस्त्रनायकम् । आवाहयामि यज्ञेऽस्मिन् गृहाणेमां नमोऽस्तु ते ॥** ॐ वज्राय नमः ।।३५।। तत आग्नेय्यां शक्तिम्- **सर्वदैत्यविनाशाय सर्वकामफलप्रदे । सर्वसत्त्वहिते शक्ते शान्तिं यच्छ नमोऽस्तु ते ॥** ॐ शक्तये नमः ।।३६।। ततो दक्षिणस्यां दण्डम्- **धर्मराजस्य हस्तस्य यमस्य च सदा प्रिय । दण्डायुध नमस्तेऽस्तु सर्वसिद्धिप्रदो भव ॥** ॐ दण्डाय नमः ।।३७।। ततो नैर्ऋत्यां खड्गम्- **नीलजीमूतवर्ण त्वं तीक्ष्णदंष्ट्र कृशोदर । खड्गराज नमस्तुभ्यं पूजेयं प्रतिगृह्यताम् ॥** ॐ खड्गाय नमः ।।३८।। ततः पश्चिमे पाशम्- **देवोऽसि वरुणास्त्र त्वं दैत्यवंशविदारण । पाश मां समरे रक्ष रज्जुराज नमोऽस्तु ते ॥** ॐ पाशाय नमः ।।३९।। ततो वायव्याम् अङ्कुशम्- **गजघ्नं परवीरघ्नं परसैन्यापहारकम् । गणेशस्य प्रियं तस्मादङ्कुशाय नमो नमः ॥** ॐ अंकुशाय नमः ।।४०।। ततस्तद्बाह्ये उत्तरतः रक्तपरिधौ गौतमम्- **ॐ सप्तऽऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् । सप्तापः स्वपतो लोकमीयुस्तत्र जागृतोऽअस्वप्नजौ सत्रसदौ च देवौ ॥ गौतमः सर्वभूतानामृषीणां च सदा प्रियः । श्रौतानां कर्मणां चैव सम्प्रदायप्रवर्त्तकः ॥** ॐ गौतमाय नमः ।।४१।। तत ऐशान्यां भरद्वाजम्- **भरद्वाज नमस्तेऽस्तु सदाध्ययनतत्परः । आवाहयामि यज्ञेऽस्मिन् पूजेयं प्रतिगृह्यताम् ॥** ॐ भरद्वाजाय नमः ।।४२।। ततः पूर्वे

विश्वामित्रम्- **विश्वामित्र नमस्तुभ्यं ज्वलदग्निसमप्रभ । अध्यक्षीकृत-गायत्रीतपोरूपेण संस्थितः ॥** ॐ विश्वामित्राय नमः ।।४३।। तत आग्नेय्यां कश्यपम्- **कश्यपः सर्वलोकाढ्यः सर्वभूतदयाकरः । असि त्वां प्रार्थयामीश पूजेयं प्रतिगृह्यताम् ॥** ॐ कश्यपाय नमः ।।४४।। ततो दक्षिणे जमदग्निम्- **जमदग्निर्महातेजस्तपसा ज्वलतीरतम् । आवाहयामि यज्ञेऽस्मिन् पूजेयं प्रतिगृह्यताम् ॥** ॐ जमदग्नये नमः ।।४५।। ततो नैर्ऋत्यां वसिष्ठम्- **नमस्तुभ्यं वसिष्ठाय कर्मकर्त्रे महामुने । धर्मरूपाय महते लोकानां हितकारिणे ॥** ॐ वसिष्ठाय नमः ।।४६।। ततः पश्चिमे अत्रिम्- **अत्रये तु नमस्तुभ्यं सर्वलोकहितैषिणे । तपोरूपाय सत्याय ब्रह्मणेऽमिततेजसे ॥** ॐ अत्रये नमः ।।४७।। ततो वायव्यामरुन्धतीम्- **अरुन्धति नमस्तुभ्यं सर्वसौख्यप्रदायिनी । एहि मण्डलमध्ये त्वमिमां पूजां गृहाण मे ॥** ॐ अरुन्धत्यै नमः ।।४८।। ततस्तद्बाह्ये कृष्णपरिधौ पूर्वादिक्रमेण ऐन्द्रीम्- **इन्द्राणीं गजकुम्भस्थां सहस्रनयनोज्ज्वलाम् । नमामि वरदां देवीं सर्वदेवैर्नमस्कृताम् ॥** ॐ ऐन्द्र्यै नमः ।।४९।। तत आग्नेय्यां कौमारीम्- **एह्येहि कौमारि विधेहि शान्तिं शक्तिं दधानेऽपि सदाममध्ये । स्कन्धाधिरूढे शिखिपुङ्गवाभ्यां मातः प्रसादप्रसृतिं प्रयच्छ ॥** ॐ कौमार्यै नमः ।।५०।। ततो दक्षिणस्यां ब्रह्माणीम्- **चतुर्मुखीं जगद्धात्रीं हंसारूढां वरप्रदाम् । सृष्टिरूपां महाभागां ब्रह्माणीं तां नमाम्यहम् ॥** ॐ ब्रह्माण्यै नमः ।।५१।। ततो नैर्ऋत्यां वाराहीम्- **वाराहरूपिणीं देवीं दंष्ट्रोद्धृतवसुन्धराम् । शुभदां पीतवसनां वाराहीं तां नमाम्यहम् ॥** ॐ वाराह्यै नमः ।।५२।। ततः पश्चिमे चामुण्डाम्- **चामुण्डां मुण्डमथनां मुण्डमालोपशोभिताम् । अट्टाट्टहासमुदितां नमाम्यात्मविभूतये ॥** ॐ चामुण्डायै नमः ।।५३।। ततो वायव्यां वैष्णवीम्- **शङ्खचक्रगदा-पद्मधारिणीं कृष्णरूपिणीम् । स्थितिरूपां खगेन्द्रास्यां वैष्णवीं तां नमाम्यहम् ॥** ॐ वैष्णव्यै नमः ।।५४।। तत उत्तरस्यां माहेश्वरीम्-





**वृषारूढां शुभां शुभ्रां त्रिनेत्रां वरदां शिवाम् । माहेश्वरीं नमाम्यद्य सृष्टिसंहारकारिणीम् ॥** ॐ माहेश्वर्यै नमः ।।५५।। तत ऐशान्यां वैनायकीम्- **चतुर्भुजां त्रिनेत्रां च सर्वाभरणभूषिताम् । आवाहयामि देवेशीं पूजेयं प्रतिगृह्यताम् ॥** ॐ वैनायक्यै नमः ।।५६।। एवमावाह्य अक्षतान् गृहीत्वा प्रतिष्ठापयेत् । **ॐ मनो जूतिर्ज्जु.॥** ब्रह्माद्यावाहितसर्वतो-भद्रमण्डलदेवताः सुप्रतिष्ठिता वरदा भवत । इति प्रतिष्ठाप्य '**ॐ ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः**' इति मन्त्रेणैकतन्त्रेण तत्तन्मन्त्रेण वा पूजनं कुर्यात् । ततो हस्ते जलं गृहीत्वा- **अनेन पूजनेन ब्रह्मादिसर्वतोभद्रमण्डलदेवताः प्रीयन्ताम्** । भद्रमण्डलोपरि यथोक्तं धातुकलशं संस्थाप्य सम्पूज्य सुवर्णनिर्मितव्यासप्रतिमायामग्न्युत्तारण-पूर्वकं प्रधानदेवताश्रीमद्व्यासस्य विविधोपचारैः पूजनं कुर्यात् ।।

# श्रीमद्वेदव्यासपूजनम्

**जयति पराशरसूनुः सत्यवतीहृदयनन्दनो व्यासः ।**
**येनास्यकमलगलितं वाङ्मयममृतं जगत्पिबति ॥**
**नमस्त्रय्यन्तकान्तारविहारैकपटीयसे ।**
**वादिमत्तेभसंहर्त्रे व्यासकेसरिणे नमः ॥**

ऋष्यादिन्यासः– **ॐ ब्रह्म ऋषये नमः** शिरसि । **अनुष्टुप्छन्दसे नमः** मुखे । **सत्यवतीसुतदेवतायै नमः** हृदि । **व्यां बीजाय नमः** गुह्ये । **नमः शक्तये नमः** पादयोः । **विनियोगाय नमः** सर्वाङ्गे ॥

हृदयादिषडङ्गन्यासः– **ॐ व्यां हृदयाय नमः । ॐ व्यीं शिरसे स्वाहा । ॐ व्यूं शिखायै वषट् । ॐ व्यैं कवचाय हुम् । ॐ व्यौं नेत्राभ्यां वौषट् । ॐ व्यः अस्त्राय फट् ॥**

कराङ्गन्यासः– **ॐ व्यां अङ्गुष्ठाभ्यां नमः । ॐ व्यीं तर्जनीभ्यां नमः । ॐ व्यूं मध्यमाभ्यां नमः । ॐ व्यैं अनामिकाभ्यां नमः । ॐ व्यौं कनिष्ठिकाभ्यां नमः। ॐ व्यः करतलकरपृष्ठाभ्यां नमः ॥**

ध्यानम्–''**व्याख्यामुद्रिकया लसत्करतलं सद्योगपीठस्थितं वामे जानुतले दधानमपरं हस्तेषु विद्यानिधिम् । विप्रव्रातवृतं प्रसन्नमनसं पाथोरुहाङ्गद्युतिं पाराशर्य्यमतीव पुण्यचरितं व्यासं स्मरेत्सिद्धये ॥१॥**'' इति ध्यात्वा मानसोपचारैर्वेदव्यासं सम्पूज्य अर्घस्थापनं कृत्वा सर्वतोभद्रमण्डले ब्रह्मादीनामावाहनं पूजनं च सम्पाद्य तदुपरि कलशं संस्थाप्य पूजयेत् । तत्र मण्डले विशिष्टासने वा मण्डूकादिपीठदेवताः स्थापयेत् ।

तद्यथा पीठमध्ये– **ॐ मं मण्डूकाय नमः । ॐ कां कालाग्निरुद्राय नमः । ॐ आं आधारशक्तये नमः । ॐ कूं कूर्माय नमः । ॐ पृं पृथिव्यै नमः । ॐ अं अमृतार्णवाय नमः । ॐ श्वें श्वेतद्वीपाय नमः । ॐ कं कल्पवृक्षाय नमः । ॐ मं मणिमण्डपाय नमः । ॐ स्वं स्वर्णसिंहासनाय नमः** । इति न्यसेत्पूजयेच्च ।। अग्निकोणादिषु– **ॐ धं धर्माय नमः ।**





**ॐ ज्ञां ज्ञानाय नमः । ॐ वैं वैराग्याय नमः । ॐ ऐं ऐश्वर्याय नमः ॥** पूर्वादिदिक्षु– **ॐ अं अधर्माय नमः । ॐ अं अज्ञानाय नमः । ॐ अं अवैराग्याय नमः । ॐ अं अनैश्वर्याय नमः ॥** पुनर्मध्ये– **ॐ अं अनन्ताय नमः । ॐ पं पद्माय नमः । ॐ आं आनन्दमयकन्दाय नमः । ॐ सं संविन्नालाय नमः । ॐ विं विकारमयकेसरेभ्यो नमः । ॐ प्रं प्रकृतिमयपत्रेभ्यो नमः । ॐ पं पञ्चाशद्वर्णबीजाढ्यकर्णिकायै नमः । ॐ द्वादशकलात्मने सूं सूर्यमण्डलाय नमः । ॐ षोडशकलात्मने चं चन्द्रमण्डलाय नमः । ॐ दशकलात्मने वं वह्निमण्डलाय नमः । ॐ सं सत्त्वाय नमः । ॐ रं रजसे नमः । ॐ तं तमसे नमः । ॐ आं आत्मने नमः । ॐ अं अन्तरात्मने नमः । ॐ पं परमात्मने नमः । ॐ मां मायातत्त्वाय नमः । ॐ कं कलातत्त्वाय नमः । ॐ विं विद्यातत्त्वाय नमः । ॐ पं परतत्त्वाय नमः । ॐ सं सर्वशक्तिकमलासनाय नमः** । ततो गन्धाक्षतपुष्पादिभिः '**ॐ धर्मादिपीठदेवताभ्यो नमः ।**' इति पूजयेत् ।।

हृदयकमलपत्रेषु पूर्वादितः पीठशक्तिपूजनम्– **ॐ जयायै नमः । ॐ विजयायै नमः । ॐ अजितायै नमः । ॐ अपराजितायै नमः । ॐ नित्यायै नमः । ॐ विलासिन्यै नमः । ॐ दोग्ध्र्यै नमः । ॐ अघोरायै नमः ॥** कर्णिकायाम्– **ॐ मङ्गलायै नमः** । इति पूजाप्रार्थनापूर्वकं पुनर्गन्धादिभिः '**ॐ आं ह्रीं क्रौं पीठाय नमः**' पूजयेत् । ततः स्वर्णादिनिर्मितं बिन्दुषट्कोणवृत्ताष्टदलभूपुरत्रयसहितं वेदव्यासपूजन-यन्त्रं मूर्तिं (व्यासमूर्तिस्वरूपम्– कृशः कृष्णतनुर्व्यासः पिङ्गलोऽतिजटाधरः । सुमन्तुर्जैमिनिः पैलो वैशम्पायन एव च । तस्य शिष्याश्च कर्तव्याश्चत्वारः परिपार्श्विकाः ।।) वा ताम्रपात्रे निधाय घृतेनाभ्यज्य अग्न्युत्तारणमन्त्रैः तदुपरि दुग्धधारां जलधारां च दद्यात् । तत्र मन्त्राः– **ॐ समुद्रस्य त्त्वा व्वकयाग्ग्ने परिव्ययामसि । पावकोऽअस्मब्भ्यगूंशिवो भव ॥१॥ हिमस्य त्त्वा जरायुणाग्ग्ने परिव्ययामसि । पावकोऽअस्मब्भ्यगूंशिवो भव ॥२॥ उपज्ज्मन्नुपवेतसेवतरनदीष्वा । अग्ग्ने पित्तमपामसि मण्डूकि ताभिरागहि सेमन्नो यज्ञम्पावकवर्ण्णग्गूंशिवङ्कृधि ॥३॥**

**अपामिदन्न्ययनग्गूंसमुद्द्रस्य निवेशनम् । अन्न्याँस्ते अस्मत्तपन्तु हेतयः। पावकोऽअस्मब्भ्यग्गूंशिवो भव ॥४॥ अग्ग्ने पावकरोचिषा मन्द्रया देवजिहवया । आ देवान्वक्षि यक्षि च ॥५॥ स नः पावकदीदिवोऽग्ने देवाँ२॥ऽइहावह । उपयज्ञग्गूंहविश्च नः ॥६॥ पावक या यश्चितयन्त्या कृपा क्षामन् रुरुचऽउषसो न भानुना । तूर्व्वन्नयामन्नेतशस्य नूरणऽआ यो घृणे न ततृषाणोऽअजरः ॥७॥ नमस्ते हरसे शोचिषे नमस्तेऽअस्त्वर्च्चिषे । अन्न्याँऽस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मब्भ्यग्गूंशिवो भव ॥८॥ नृषदे व्वेडप्सुषदे व्वेड् बर्हिषदे व्वेड् व्वनसदे व्वेट् स्वर्व्विदे व्वेट् ॥९॥ ये देवा देवानाँ य्यज्ञिया यज्ञियानाग्गुँसंवत्सरीणमुपभागमासते । अहुतादो हविषो यज्ञेऽअस्मिन्त्स्वयं पिबन्तु मधुनो घृतस्य ॥१०॥ ये देवा देवेष्ष्वधि देवत्त्वमायन्ये ब्रह्मणः पुरऽएतारोऽअस्य । येब्भ्योऽऋते पवते धाम किञ्चन न ते दिवो न पृथिव्याऽअधिस्न्नुषु ॥११॥ प्राणदाऽअपानदा व्यानदा व्वर्चोदा व्वरिवोदाः । अन्न्याँस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मब्भ्यग्गूंशिवो भव ॥१२॥** इत्यग्न्युत्तारणं कृत्वा स्वच्छवस्त्रेण संशोध्य पुष्पाद्यासनं दत्वा पीठमध्ये संस्थाप्य प्राणप्रतिष्ठां कुर्यात् । मूर्तिं स्पृष्ट्वा । **ॐ आँ ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहम् । अस्या वेदव्यासमूर्तेः प्राणा इह प्राणाः । ॐ आँ ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोहऽम् । अस्या वेदव्यासमूर्तेः जीव इह स्थितः । ॐ आँ ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोहऽम् । अस्या वेदव्यासमूर्तेः सर्वेन्द्रियाणि वाङ्मनस्त्वच्चक्षुःश्रोत्रजिहवाघ्राणपाणिपादपायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा ॥** इति प्राणप्रतिष्ठां कुर्यात् ॥ **ॐ मनो जूतिर्जुषतामाज्ज्यस्य बृहस्पतिर्यज्ज्ञग्गूंसमिमन्दधातु । व्विश्वेदेवासऽइह मादयन्तामों३॥प्रतिष्ठ ॥ ॐ अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाश्चरन्तु च । अस्यै देवत्वमर्चायै मामहेति च कश्चन ॥ ॐ श्रीमद्वेदव्यासः सुप्रतिष्ठितो भव ।** इति प्रतिष्ठापयेत् । ततः स्वर्णशलाकया नेत्रोन्मीलनं कुर्यात्– **ॐ व्वृत्रस्यासि कनीनकश्चक्षुर्दाऽअसि चक्षुर्म्मे देहि ॥** इति नेत्रोन्मीलनं कृत्वा





गन्धादिपञ्चोपचारैः सम्पूज्य गर्भाधानादिपञ्चदशसंस्कारार्थं पञ्चदशप्रणवावृत्तिं जपेत् । सङ्कल्पः– **ॐ अद्य श्रीमद्वेदव्यासस्य गर्भाधानादिषोडशसंस्कारार्थं षोडशप्रणवावृत्तिमहं करिष्ये ।** प्रणम्य– **ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॥** पुनर्जलेन– अनया षोडशप्रणवावृत्या षोडशसंस्काराः सम्पद्यन्ताम् । इति । ततो ध्यात्वा (**ॐ व्यां वेदव्यासाय नमः**) इति मूलमन्त्रान्तपुरुषसूक्तमन्त्रैरावाहनादि पुष्पान्तैरुपचारैः श्रीमद्वेदव्यास–पूजनं कुर्यात् ॥

ध्यानम्– **तं वेदशास्त्रपरिनिष्ठितशुद्धबुद्धिं चर्माम्बरं सुरमुनीन्द्रयुतं कवीन्द्रम् । कृष्णत्वचं कनकपिङ्गजटाकलापं व्यासं नमामि शिरसा तिलकं द्विजानाम् ॥** आवाहनम्– **ॐ सहस्त्रशीर्षा पुरुषः सहस्त्राक्षः सहस्त्रपात् । सभूमिग्गूंसर्व्वतस्पृत्वाऽत्यष्ठिद्द-शाङ्गुलम् ॥ देवेश भक्तिसुलभ सर्वावरणसंयुत । यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरो भव ॥** ॐ व्यां वेदव्यासाय नमः आवाहनं समर्पयामि ॥ (शालिग्रामपूजायाम् आवाहनाभावात्तुलसीपत्रं पुष्पं च निवेदयेत्) । आसनम्– **ॐ पुरुषऽएवेदग्गूंसर्व्वय्यँद्भूतँय्यच्च भाव्व्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ कार्तस्वरमयं दिव्यं नानागुणसमन्वितम् । अनेकशक्तिसंयुक्तमासनं प्रतिगृह्यताम् ॥** ॐ व्यां वेदव्यासाय नमः आसनं समर्पयामि ॥ पाद्यम्– **ॐ एतावानस्य महिमातो ज्यायाँश्च पूरुषः । पादोऽस्य व्विश्श्वा भूतानि त्रिपादस्यामृतन्दिवि ॥ यद्भक्तिलेशसम्पर्कात् परमानन्दसम्भवः । तस्मै ते चरणाब्जाय पाद्यं देव प्रकल्पये ॥** ॐ व्यां वेदव्यासाय नमः पाद्यं समर्पयामि ॥ अर्घ्यम्– **ॐ त्रिपादूर्ध्वऽउदैत्पुरुषः पादोऽस्येहाभवत्पुनः । ततो व्विष्ष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥ तापत्रयहरं दिव्यं परमानन्दलक्षणम् । तापत्रयविनिर्मुक्त्यै तवार्घ्यं कल्पयाम्यहम् ॥** ॐ व्यां वेदव्यासाय नमः अर्घ्यं समर्पयामि ॥

आचमनीयम्– **ॐ ततो व्विराडजायत व्विराजोऽअधिपूरुषः । सजातोऽअत्यरिच्च्यत पश्चाद् भूमिमथो पुरः ।। देव देव नमस्तुभ्यं पुराणपुरुषोत्तम । मयानीतमिदं तोयं गृहीत्वाचमनं कुरु ।।** ॐ व्यां वेदव्यासाय नमः आचमनीयं समर्पयामि । स्नानम्– **ॐ तस्माद्यज्ञात्सर्व्वहुतः सम्भृतम्पृषदाज्ज्यम् । पशूँस्ताँश्चक्क्रे व्वायव्व्यानारायण्ण्या ग्राम्म्याश्च ये ।। गङ्गा च यमुना चैव गोदावरी सरस्वती । कृष्णा च गौतमी वेणी शिप्रा सिन्धुस्तथैव च । तापी पयोष्णी रेवा च ताभ्यः स्नानार्थमाहृतम् । तोयमेतत् सुखस्पर्शं स्नानीयं प्रतिगृह्यताम् ।।** ॐ व्यां वेदव्यासाय नमः स्नानं समर्पयामि । स्नानाङ्गमाचमनीयं समर्पयामि । मधुपर्कः– **ॐ यन्मधुनो मधव्यम्परमग्गूंरूपमन्नाद्यम् । तेनाहम्मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानि ।। श्रमापहारकं दिव्यं सिताज्यमिश्रितं मधु । मधुपर्कं गृहाण त्वं सुस्वादु तपसान्निधे ।।** ॐ व्यां वेदव्यासाय नमः मधुपर्कं समर्पयामि । आचमनीयं समर्पयामि । पयःस्नानम्– **ॐ पयः पृथिव्यां पयऽओषधीषु पयो दिव्यन्तरिक्षे पयोधाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ।। कामधेनुसमुद्भूतं सर्वेषां जीवनं परम् । पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम् ।।** ॐ व्यां वेदव्यासाय नमः पयःस्नानं समर्पयामि । शुद्धोदकस्नानं समर्पयामि । आचमनं समर्पयामि । दधिस्नानम्– **ॐ दधिक्क्राव्ण्णोऽअकारिषं जिष्णोरश्श्वस्य व्वाजिनः । सुरभि नो मुखात्करत्प्रणऽआयूग्गुँषि तारिषत् ।। पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् । दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम् ।।** ॐ व्यां वेदव्यासाय नमः दधिस्नानं समर्पयामि । शुद्धोदकस्नानं समर्पयामि । आचमनं समर्पयामि । घृतस्नानम्– **ॐ घृतङ्घृतपावानः पिबत व्वसाँव्वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा । दिशः प्रदिशऽआदिशो व्विदिशऽउद्दिशो दिग्भ्यः स्वाहा ।। कामधेनुसमुत्पन्नं सर्वसन्तोषकारकम् । घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ।।** ॐ व्यां





वेदव्यासाय नमः घृतस्नानं समर्पयामि । शुद्धोदकस्नानं समर्पयामि । आचमनं समर्पयामि । मधुस्नानम्– **ॐ मधुव्वाताऽऋतायते मधु क्षरन्ति सिन्धवः । माद्ध्वीर्नः सन्त्वोषधीः ।। मधुनक्तमुतोषसो मधुमत्पार्थिवग्गूं रजः । मधु द्यौरस्तु नः पिता ।। मधुमान्नो व्वनस्पतिर्मधुमाँ२।।अस्तु सूर्य्यः । माद्ध्वीर्गावो भवन्तु नः ।। पुष्परेणुसमुत्पन्नं सुस्वादु मधुरं मधु । तेजः पुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ।।** ॐ व्यां वेदव्यासाय नमः मधुस्नानं समर्पयामि । शुद्धोदकस्नानं समर्पयामि । आचमनं समर्पयामि । शर्करास्नानम्– **ॐ अपाग्गुँरसमुद्द्वयसग्गुँसूर्य्ये सन्तग्गूंसमाहितम् । अपाग्गुँरसस्य यो रसस्तँव्वो गृह्णाम्म्युत्तममुपयाम गृहीतोऽसीन्द्राय त्त्वा जुष्ट्टं गृह्ण्णाम्म्येष ते योनिरिन्द्राय त्त्वा जुष्ट्टतमम् ।। इक्षुसारसमुद्भूतां शर्करां पुष्टिदां शुभाम् । मलापहारिकां दिव्यां स्नानार्थं प्रतिगृह्यताम् ।।** ॐ व्यां वेदव्यासाय नमः शर्करास्नानं समर्पयामि । शुद्धोदकस्नानं समर्पयामि । आचमनं समर्पयामि । अथवैकतन्त्रेण मिश्रितपञ्चामृत–स्नानं कारयेत् । मिश्रितपञ्चामृतस्नानम्– **ॐ पञ्च नद्यः सरस्वतीमपि यन्ति सस्त्रोतसः । सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ।। पयो दधि घृतं चैव मधु शर्करयाऽन्वितम् । पञ्चामृतं मयानीतं स्नानार्थं प्रतिगृह्यताम् ।।** ॐ व्यां वेदव्यासाय नमः मिश्रितपञ्चामृतस्नानं समर्पयामि । शुद्धोदकस्नानं समर्पयामि । आचमनं समर्पयामि । गन्धोदकस्नानम्– **ॐ गन्धर्व्वस्त्त्वा व्विश्श्वावसुः परिदधातु व्विश्श्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईडितः ।। मलयाचलसम्भूतचन्दनेन विमिश्रितम् । इदं गन्धोदकस्नानं कुङ्कुमाक्तं प्रगृह्यताम् ।।** ॐ व्यां वेदव्यासाय नमः गन्धोदकस्नानं समर्पयामि । शुद्धोदकस्नानं समर्पयामि । आचमनं समर्पयामि । इति स्नानं कारयित्वा गन्धादिभिर्देवं सम्पूज्य पुरुषसूक्तेनाभिषेकं कृत्वा शुद्धोदकेन स्नापयेत् । शुद्धोदकस्नानम्– **ॐ आपोऽअस्म्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्प्वः पुनन्तु । व्विश्श्वग्गूंहि रिप्प्रम्प्रवहन्ति**

**देवीरुदिदाभ्यः शुचिरापूतऽएमि ।। दीक्षा तपसोस्तनूरसि तान्त्वा शिवाग्गुँशग्गमाम्परिदधे भद्द्रं व्वर्ण्णं पुष्यन् ।। शुद्धं यत्सलिलं दिव्यं गङ्गाजलसमं स्मृतम् । समर्पितं मया भक्त्या शुद्धस्नानाय गृह्यताम् ।।** ॐ व्यां वेदव्यासाय नमः शुद्धोदकस्नानं समर्पयामि । आचमनीयं जलं समर्पयामि । ततः स्वर्णमयमूर्तिं शालिग्रामं वा कलशे (सिंहासने वा) संस्थाप्य वस्त्राद्युपचारान्दद्यात् ।। वस्त्रम्– **ॐ तस्माद्यज्ज्ञा-त्सर्व्वहुतऽऋचः सामानि जज्ञिरे । छन्दाग्गुँसि जज्ञिरे तस्माद्यजुस्तस्म्मादजायत ।। तन्तुसन्तानसंयुक्तं कलाकौशलकल्पितम् । पीतवस्त्रयुगं देव कृपया प्रतिगृह्यताम् ।।** ॐ व्यां वेदव्यासाय नमः वस्त्रं समर्पयामि । आचमनं समर्पयामि । उपवस्त्रम्– **ॐ सुजातो ज्ज्योतिषा सह शर्म्म व्वरूथमासदत्स्वः । व्वासोऽअग्ग्ने व्विश्श्वरूप-ग्गूंसंव्व्ययस्व व्विभावसो ।। उपवस्त्रं प्रयच्छामि देवाय परमात्मने । भक्त्या समर्पितं देव प्रसीद विदुषां वर ।।** ॐ व्यां वेदव्यासाय नमः उपवस्त्रं समर्पयामि । आचमनं समर्पयामि । यज्ञोपवीतम्– **ॐ तस्म्मादश्श्वाऽअजायन्त ये के चोभयादतः । गावो ह जज्ञिरे तस्म्मात्तस्म्माज्जाताऽअजावयः ।। यस्य शक्तित्रयेणेदं सम्प्रोतं सचराचरम् । यज्ञरूपाय तस्मै ते यज्ञसूत्रं प्रकल्पये ।।** ॐ व्यां वेदव्यासाय नमः उपवीतं समर्पयामि । आचमनं समर्पयामि । चन्दनम्– **ॐ तँय्यज्ञम्बर्हिषि प्प्रौक्षन्पुरुषञ्जातमग्ग्रतः । तेन देवाऽअयजन्त साद्ध्याऽऋषयश्च ये ।। श्रीखण्डचन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् । विलेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यताम् ।।** ॐ व्यां वेदव्यासाय नमः चन्दनं समर्पयामि । अक्षताः (यवतिलाः)– **ॐ यवोऽसि यवयास्म्मद्द्वेषो यवयारातीः ।। अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभिताः । मया निवेदिता भक्त्या गृहाण वेदवित्पते ।।** ॐ व्यां वेदव्यासाय नमः अक्षतान् समर्पयामि । पुष्पाणि– **ॐ यत्पुरुषँव्व्यदधुः कतिधा व्व्यकल्प्पयन् । मुखङ्किमस्यासीत्किम्बाहू किमूरू पादाऽउच्च्येते ।। सुगन्धीनि सुपुष्पाणि देशकालोद्भवानि च । मयानीतानि पूजार्थं प्रीत्या स्वीकुरु तानि मे ।।**





ॐ व्यां वेदव्यासाय नमः पुष्पाणि समर्पयामि । पुष्पमाला– **नानापुष्पविचित्राढ्यां पुष्पमालां सुशोभनाम् । प्रयच्छामि च देवेश गृहाण वेदवित्तम ।।** ॐ व्यां वेदव्यासाय नमः पुष्पमालां समर्पयामि । तुलसीपत्राणि– **तुलसीं हेमरूपां च रत्नरूपां च मञ्जरीम् । भवमोक्षप्रदां तुभ्यमर्पयामि हरिप्रियाम् ।।** ॐ व्यां वेदव्यासाय नमः तुलसीपत्राणि समर्पयामि । दूर्वादलानि– **ॐ काण्डात्त्काण्डात्त्प्ररोहन्ती परुषः परुषस्प्परि । एवा नो दूर्व्वे प्प्रतनु सहस्र्रेण शतेन च ।। दूर्वाङ्कुरान्सुहरितानमृतान् मङ्गलप्रदान् । आनीतांस्तव पूजार्थं गृहाण बादरायण ।।** ॐ व्यां वेदव्यासाय नमः दूर्वाङ्कुरान् समर्पयामि । आभूषणानि– **ॐ हिरण्ण्यपाणिः सविता व्विचर्षणिरुभे द्यावापृथिवीऽअन्तरीयते । अपामीवाम्बाधते व्वेतिसूर्य्यमभिकृष्ण्णेन रजसाद्यामृणोति ।। वज्रमाणिक्यवैदूर्यमुक्ताविद्रुममण्डितम् । पुष्पराग-समायुक्तं भूषणं प्रतिगृह्यताम् ।।** ॐ व्यां वेदव्यासाय नमः अलङ्करणार्थे आभूषणानि समर्पयामि । नानापरिमलद्रव्याणि– **ॐ अहिरिवभोगैः पर्य्येति बाहुञ्ज्यायाहेतिम्परिबाधमानः । हस्तग्घ्नो व्विश्श्वा व्वयुनानि व्विद्द्वान्पुमान् पुमाग्गुँसम्परिपातु व्विश्श्वतः ।। अबीरकं गुलालं च हरिद्राचूर्णमिश्रितम् । दयानिधे गृहाण त्वं शुभदो भव शोभन ।।** ॐ व्यां वेदव्यासाय नमः नानापरिमलद्रव्याणि समर्पयामि । सुगन्धिद्रव्यम्– **ॐ त्र्यम्बकँय्यजामहे सुगन्धिम्पुष्टिवर्द्धनम् । उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ।। दिव्यपुष्पसमुद्भूतं परमानन्दकरं रसम् । सुगन्धं पुष्टिदं देव गृहाण पुरुषोत्तम ।।** ॐ व्यां वेदव्यासाय नमः सुगन्धिद्रव्यं समर्पयामि ।।

**अङ्गपूजनम्** । वामहस्ते गन्धपात्रं गृहीत्वा दक्षिणेनार्चयेत्– **ॐ वेदव्यासाय नमः** पादौ पूजयामि । **ॐ वसिष्ठनप्त्रे नमः** गुल्फौ पूजयामि । **ॐ शक्तिपौत्राय नमः** जानुनी पूजयामि । **ॐ अकल्मषे नमः** जङ्घे पूजयामि । **ॐ पराशरपुत्राय नमः** कटी पूजयामि । **ॐ शुकताताय नमः** मेढ्रं पूजयामि । **ॐ तपोनिधये नमः** नाभिं पूजयामि । **ॐ**

**विष्णुरूपिणे नमः** हृदयं पूजयामि । **ॐ ब्रह्मनिधये नमः** कण्ठं पूजयामि । **ॐ वासिष्ठाय नमः** बाहू पूजयामि । **ॐ अचतुर्मुखब्रह्मणे नमः** मुखं पूजयामि । **ॐ द्विबाहुहरये नमः** जिह्वां पूजयामि । **ॐ अभालाक्षिशम्भवे नमः** दन्तान् पूजयामि । **ॐ बादरायणाय नमः** नेत्रे पूजयामि । **ॐ वेदविस्तारकाय नमः** ललाटं पूजयामि । **ॐ पुराणकर्त्रे नमः** शिरः पूजयामि । **ॐ सर्वज्ञाननिधये नमः** सर्वाङ्गं पूजयामि ।

**आवरणपूजनम्** । करसम्पुटौ कृत्वा श्रीवेदव्यासं प्रार्थयेत् **'सर्वज्ञाननिधे व्यास वेदविस्तारकारक । अनुज्ञां देहि मे देव परिवारार्चनाय ते ॥'** इत्यनुज्ञामादाय तं सुप्रसन्नं विभाव्य यन्त्रे मध्यबिन्दुमारभ्य गन्धपुष्पैरावरणपूजनं कुर्यात् । **'ॐ व्यां वेदव्यासाय नमः'**

**प्रथमावरणम्-** षट्कोणकेसरेषु आग्नेय्यादिचतुर्दिक्षु मध्ये पूर्वादिदिक्षु च षडङ्गन्यासोक्तमन्त्रैः यन्त्राङ्गपूजनं कुर्यात् । आग्नेये- **ॐ व्यां हृदयाय नमः** हृदयं पूजयामि । नैर्ऋत्ये **ॐ व्यीं शिरसे स्वाहा** शिरः पूजयामि । वायव्ये **ॐ व्यूं शिखायै वषट्** शिखां पूजयामि । ईशान्ये **ॐ व्यैं कवचाय हुम्** कवचं पूजयामि । मध्ये **ॐ व्यौं नेत्राभ्यां वौषट्** नेत्रे पूजयामि । सर्वदिक्षु **ॐ व्यः अस्त्राय फट्** अस्त्रं पूजयामि । इति गन्धाक्षतपुष्पादिभिः षडङ्गानि पूजयित्वाऽञ्जलौ पुष्पाण्यादाय **'ॐ व्यां व्यासाय नमः'** इति मूलमुच्चार्य **'अभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥'** इति पठित्वा पुष्पाञ्जलिं च दत्वा धेनुमुद्रया प्रणमेत्- **'वदनकमलनिर्यद्यस्य पीयूषमाद्यं पिबति जनवरोऽयं पातु सोऽयं गिरं मे । वदनवनविहारः सत्यवत्याः कुमारः प्रणतदुरितहारः शार्ङ्गधन्वावतारः ॥'** पुनर्हस्ते जलं गृहीत्वा- अनेन प्रथमावरणपूजनेन श्रीमद्वेदव्यासः प्रीयताम् ॥१॥

एवं षडङ्गपूजनं कृत्वा श्रीमद्वेदव्यासपूजनयन्त्रेऽष्टदलेषु पूज्यपूजक-योरन्तराले प्राचीं तदनुसारेण अन्याः दिशः प्रकल्प्य प्राच्यादिचतुर्दिक्षु दक्षिणावर्त्तेन च गन्धाक्षतपुष्पादिभिः द्वितीयावरणपूजनं कुर्यात् ।





**द्वितीयावरणम्- ॐ पैलाय नमः** पैलं पूजयामि । **ॐ वैशम्पायनाय नमः** वैशम्पायनं पूजयामि । **ॐ जैमिनये नमः** जैमिनिं पूजयामि । **ॐ सुमन्तवे नमः** सुमन्तुं पूजयामि । तत आग्नेयादिचतुष्कोणेषु- **ॐ श्रीशुकाय नमः** श्रीशुकं पूजयामि । **ॐ रोमहर्षणाय नमः** रोमहर्षणं पूजयामि । **ॐ उग्रश्रवसे नमः** उग्रश्रवसं पूजयामि । **ॐ अन्यमुनीन्द्रेभ्यो नमः** अन्यमुनीन्द्रान् पूजयामि । इत्यष्टौ पूजयित्वाऽञ्जलौ पुष्पाण्यादाय **'ॐ व्यां व्यासाय नमः'** इति मूलमुच्चार्य **'अभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥'** इति पठित्वा पुष्पाञ्जलिं च दत्वा धेनुमुद्रया प्रणमेत् । पुनर्हस्ते जलं गृहीत्वा- अनेन द्वितीयावरणपूजनेन श्रीमद्वेदव्यासः प्रीयताम् ॥२॥

**तृतीयावरणम्-** ततो भूपुराभ्यन्तरे प्रसिद्धपूर्वादितः इन्द्रादि-दशदिक्पालान् पूजयेत् । **ॐ लं इन्द्राय नमः** इन्द्रं पूजयामि । **ॐ रं अग्नये नमः** अग्निं पूजयामि । **ॐ मं यमाय नमः** यमं पूजयामि । **ॐ क्षं निर्ऋतये नमः** निर्ऋतिं पूजयामि । **ॐ वं वरुणाय नमः** वरुणं पूजयामि । **ॐ यं वायवे नमः** वायुं पूजयामि । **ॐ सं सोमाय नमः** सोमं पूजयामि । **ॐ हं ईशानाय नमः** ईशानं पूजयामि । **ॐ आं ब्रह्मणे नमः** ब्रह्माणं पूजयामि । **ॐ ह्रीं अनन्ताय नमः** अनन्तं पूजयामि । इति दशदिक्पालान् पूजयित्वाऽञ्जलौ पुष्पाण्यादाय **'ॐ व्यां वेदव्यासाय नमः'** इति मूलमुच्चार्य **'अभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ॥'** इति पठित्वा पुष्पाञ्जलिं च दत्वा धेनुमुद्रया प्रणमेत् । पुनर्हस्ते जलं गृहीत्वा- अनेन तृतीयावरणपूजनेन श्रीमद्वेद-व्यासः प्रीयताम् ॥३॥

**चतुर्थावरणम्-** भूपुरबाह्ये प्रसिद्धपूर्वादितः वज्राद्यायुधानि च पूजयेत् । **ॐ वं वज्राय नमः** वज्रं पूजयामि । **ॐ शं शक्तये नमः** शक्तिं पूजयामि । **ॐ दं दण्डाय नमः** दण्डं पूजयामि । **ॐ खं खड्गाय नमः**

खड्गं पूजयामि । **ॐ पां पाशाय नमः** पाशं पूजयामि । **ॐ अं अङ्कुशाय नमः** अङ्कुशं पूजयामि । **ॐ गं गदायै नमः** गदां पूजयामि । **ॐ शूं शूलाय नमः** शूलं पूजयामि । **ॐ पं पद्माय नमः** पद्मं पूजयामि । **ॐ चं चक्राय नमः** चक्रं पूजयामि ॥ इति वज्राद्यायुधानि पूजयित्वाऽञ्जलौ पुष्पाण्यादाय **'ॐ व्यां वेदव्यासाय नमः'** इति मूलमुच्चार्य **'अभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम् ॥'** इति पठित्वा पुष्पाञ्जलिं च दत्वा धेनुमुद्रया प्रणमेत् । पुनर्हस्ते जलं गृहीत्वा– अनेन चतुर्थावरणपूजनेन श्रीमद्वेद-व्यासः प्रीयताम् ॥४॥

इत्यावरणपूजनं च कृत्वाऽष्टाविंशतिनामभिर्व्यासस्य पूजनं कुर्यात् ।

**सङ्कल्पः**- ॐ अद्य चतुर्विधपुरुषार्थसिद्ध्यर्थम् अष्टाविंशति-व्यासानां गन्धपुष्पैः पूजनमहं करिष्ये ।

**नमस्ते भगवन् व्यास सर्वशास्त्रार्थकोविद ।**
**ब्रह्मविष्णुमहेशानमूर्ते सत्यवतीसुत ॥**

**ॐ स्वयम्भुव्यासाय नमः । ॐ प्रजापतिव्यासाय नमः । ॐ शुक्राचार्यव्यासाय नमः । ॐ बृहस्पतिव्यासाय नमः । ॐ सवितृव्यासाय नमः । ॐ मृत्युव्यासाय नमः । ॐ इन्द्रव्यासाय नमः । ॐ वसिष्ठव्यासाय नमः । ॐ सारस्वतव्यासाय नमः । ॐ त्रिधामव्यासाय नमः ॥१०॥ ॐ त्रिशिखव्यासाय नमः । ॐ भरद्वाजव्यासाय नमः । ॐ अन्तरिक्षव्यासाय नमः । ॐ वर्णिव्यासाय नमः । ॐ त्रय्यारुणव्यासाय नमः । ॐ धनञ्जयव्यासाय नमः । ॐ ऋतुञ्जयव्यासाय नमः । ॐ जयव्यासाय नमः । ॐ पुनर्भरद्वाजव्यासाय नमः । ॐ गौतमव्यासाय नमः ॥२०॥ ॐ हर्यात्मव्यासाय नमः । ॐ वाजश्रवोमुनिव्यासाय नमः । ॐ तृणबिन्दुव्यासाय नमः । ॐ वाल्मीकिव्यासाय नमः । ॐ शक्तिव्यासाय नमः । ॐ पराशरव्यासाय नमः । ॐ जातुकर्णव्यासाय नमः । ॐ कृष्णद्वैपायनव्यासाय नमः ॥२८॥** हस्ते जलं गृहीत्वा– अनेन पूजनेन अष्टाविंशतिर्व्यासाः प्रीयन्तां न मम ॥





## श्रीवेदव्यासाष्टोत्तरशतनामभिः पूजनम्

पुनर्हस्ते जलं गृहीत्वा– ॐ अद्य श्रीवेदव्यासाष्टोत्तरशतनामभिः पूजनं करिष्ये ।

**श्रीमद्वेदपयोनिधिं सुमनसा निर्मथ्य रत्नानि यः**
**प्रादाच्छिष्यचतुष्टयं करुणया लोकोपकाराय वै ।**
**वेदान्तस्मृतिभारतैर्बहुविधैराख्यानकैर्विस्तरैः**
**पीयूषं प्रसृतं कृपालुहरये व्यासाय तस्मै नमः ॥**

**ॐ वेदव्यासाय नमः । ॐ वासिष्ठाय नमः । ॐ शक्तिपौत्राय नमः । ॐ पाराशर्याय नमः । ॐ सत्यवतीसूनवे नमः । ॐ शुकताताय नमः । ॐ अनघाय नमः । ॐ तपोनिधये नमः । ॐ विष्णुरूपिणे नमः । ॐ ब्रह्मनिधये नमः ॥१०॥ ॐ अचतुर्मुखब्रह्मणे नमः । ॐ द्विबाहुहरये नमः । ॐ अभालाक्षिशम्भवे नमः । ॐ बादरायणाय नमः । ॐ वेदविस्तारकाय नमः । ॐ पुराणभारतकर्त्रे नमः । ॐ सर्वज्ञाननिधये नमः । ॐ पैलादिगुरवे नमः । ॐ महामुनीन्द्राय नमः । ॐ वेदशाखाविभागकृते नमः ॥२०॥ ॐ वेदवेदान्ततत्त्वज्ञाय नमः । ॐ नररूपधराय नमः । ॐ व्याख्यामुद्रालसत्कराय नमः । ॐ सद्योगपीठस्थिताय नमः । ॐ सर्वविद्यामहार्णवाय नमः । ॐ विप्रव्रातवृताय नमः । ॐ प्रसन्नमनसे नमः । ॐ पाथोरुहाङ्घ्रियुतये नमः । ॐ पुण्यचरिताय नमः । ॐ कवित्वशक्तिसम्पन्नाय नमः ॥३०॥ ॐ सम्पत्कीर्तिकराय नमः । ॐ सिद्धिप्रदाय नमः । ॐ ब्रह्मविद्याप्रदात्रे नमः । ॐ विशालबुद्धये नमः । ॐ पुण्डरीकनेत्राय नमः । ॐ ज्ञानमयप्रदीपाय नमः । ॐ कविवेधसे नमः । ॐ सरस्वतीतटवासिने नमः । ॐ वदनवनविहाराय नमः । ॐ प्रणतदुरितहाराय नमः ॥४०॥ ॐ नारायणावताराय नमः । ॐ विपुलमतिदाय नमः । ॐ विततयशसे नमः । ॐ कविकलास्तमतिभास्कराय नमः । देवमुनिप्रवरार्चिताय नमः । ॐ शाश्वतधर्मनिरूपकाय नमः । ॐ विविधचित्राख्यानकाय नमः । ॐ श्रुतिविरोधसमन्वयदर्शकाय नमः । ॐ निखिलवादिमताध्व्यविदारणाय नमः । ॐ ब्रह्मसूत्रग्रथितवते नमः ॥५०॥ ॐ ब्रह्मानन्दकराय नमः ।**

ॐ त्रिदेवस्वरूपाय नमः । ॐ महाज्ञानिने नमः । ॐ सत्यसन्धाय नमः । ॐ प्रशान्तात्मने नमः । ॐ कृष्णद्वैपायनाय नमः । ॐ वाग्मिने नमः । ॐ वेदमूर्तिमते नमः । ॐ चिरञ्जीविने नमः । ॐ चित्तदोषविनाशकाय नमः ॥६०॥ ॐ विश्वनाथस्तुतिकराय नमः । ॐ विश्ववन्द्याय नमः । ॐ जगद्गुरवे नमः । ॐ जितेन्द्रियाय नमः । ॐ वैराग्यनिरताय नमः । ॐ सदाचारस्थिताय नमः । ॐ स्थितप्रज्ञाय नमः । ॐ शङ्करार्य-प्रसादकृते नमः । ॐ ब्रह्मण्याय नमः । ॐ ब्राह्मणाय नमः ॥७०॥ ॐ ब्रह्मविद्याप्रकाशकाय नमः । ॐ ब्रह्मात्मैकत्वविज्ञात्रे नमः । ॐ वेदाब्जभास्कराय नमः । ॐ बदरीवनवासाय नमः । ॐ श्रुत्यादिसंरक्षकाय नमः । ॐ गुणागाराय नमः । ॐ संशयाद्रिखण्डनाय नमः । ॐ शान्तचित्ताय नमः । ॐ सर्वमङ्गलाय नमः । ॐ पूर्णप्रज्ञाय नमः ॥८०॥ ॐ परमार्थपूरकाय नमः । ॐ सुलक्षणाय नमः । ॐ भगवते नमः । ॐ तत्त्वप्रकाशिने नमः । ॐ करुणार्णवाय नमः । ॐ पुराणपुरुषाय नमः । ॐ परमतपस्विने नमः । ॐ सर्वतन्त्रस्वतन्त्राय नमः । ॐ तत्त्वज्ञनायकाय नमः । ॐ योगीन्द्राय नमः ॥९०॥ ॐ आत्मवित्पतये नमः । ॐ सनातनाय नमः । ॐ गोवंशपरिरक्षकाय । ॐ अघहराय नमः । ॐ पुरातनाय नमः । ॐ सत्यविज्ञानभानवे नमः । ॐ योगगम्याय नमः । ॐ योगिस्तुताय नमः । ॐ निरायुधाय नमः । ॐ सर्वविघ्नहराय नमः ॥१००॥ ॐ षड्रिपुनाशकाय नमः । ॐ त्यागविग्रहाय नमः । ॐ अतीतानागतज्ञानार्णवाय नमः । ॐ अनन्तगुणसम्पन्नाय नमः । ॐ यज्ञाध्यक्षाय नमः । ॐ यज्ञविस्तारकाय नमः । ॐ वर्णाश्रमधर्मरक्षकाय नमः । ॐ विश्वविभूतये नमः । ॐ आरोग्यसुखप्रदाय नमः ॥१०९॥

धूपः- **ॐ ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्याग्ँशूद्रोऽअजायत ॥ वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥** ॐ व्यां वेदव्यासाय नमः धूपमाघ्रापयामि ।। दीपः- **ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽअजायत । श्रोत्राद् व्वायुश्च प्प्राणश्च मुखादग्निरजायत ॥ आज्यं सद्वर्तिसंयुक्तं वह्निना योजितं मया । दीपं गृहाण देवेश त्रैलोक्यतिमिरापह ॥** ॐ व्यां वेदव्यासाय नमः दीपं दर्शयामि । नैवेद्यम्- **ॐ नाभ्याऽआसीदन्तरिक्षग्गूंशीर्ष्णो द्द्यौः समवर्त्तत । पद्भ्याम्भूमिर्द्दिशः श्रोत्रात्तथा लोकाँ२॥ऽअकल्पयन् ॥ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् । मया निवेदितं भक्त्या नैवेद्यं प्रतिगृह्यताम् ॥** ॐ व्यां वेदव्यासाय नमः नैवेद्यं समर्पयामि । नैवेद्यं जलेन सम्प्रोक्ष्य धेनुमुद्रयाऽमृतीकृत्य '**ॐ प्राणाय स्वाहा, ॐ अपानाय स्वाहा, ॐ व्यानाय स्वाहा, ॐ समानाय स्वाहा, ॐ उदानाय स्वाहा**' इति पञ्चग्रासमुद्राप्रदर्शनपूर्वकं पञ्चग्रासान्दद्यात् । उत्तरापोशनार्थे (हस्तमुखप्रक्षालनार्थं) जलम् आचमनं च समर्पयेत् । करोद्वर्तनार्थे चन्दनम्- **ॐ अग्गूंशुना तेऽअग्गूंशुः पृच्यताम्परुषा परुः । गन्धस्ते सोममवतु मदाय रसोऽअच्च्युतः ॥ मलयाचलसम्भूतचन्दनं रजनी-युतम् । उद्वर्तनं मया दत्तं गृहाण विदुषाम्पते ॥** ॐ व्यां वेदव्यासाय नमः करोद्वर्तनार्थे चन्दनं समर्पयामि । ताम्बूलम्- **ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्वत । व्वसन्तोऽस्यासीदाज्ज्यं ग्रीष्मऽइद्ध्मः शरद्धविः ॥ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् । एलादिचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥** ॐ व्यां वेदव्यासाय नमः मुखवासताम्बूलं समर्पयामि । दक्षिणा- **ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽ आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा व्विधेम ॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥** ॐ व्यां वेदव्यासायनमः दक्षिणां समर्पयामि । नीराजनम्- **ॐ इदग्गूंहविः प्रजननम्मेऽअस्तु दशवीरग्गूंसर्व्वगणग्गुँ स्वस्तये । आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि । अग्निः प्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतोऽअस्म्मासु धत्त ॥ कदलीगर्भसम्भूत-कर्पूरेण प्रदीपितम् । आरार्तिकमहं कुर्वे पश्य मे वरदो भव ॥** ॐ व्यां वेदव्यासाय नमः कर्पूरारार्तिक्यं समर्पयामि । प्रदक्षिणा- **ॐ सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः । देवा यद्यज्ञन्तन्वानाऽअबद्ध्नन्पुरुषम्पशुम् ॥ यानि कानि च पापानि**

**ब्रह्महत्यासमानि च । तानि तानि प्रणश्यन्तु प्रदक्षिणपदे-पदे ॥** ॐ व्यां वेदव्यासाय नमः प्रदक्षिणचतुष्टयं समर्पयामि । पुष्पाञ्जलिः- **ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्प्रथमान्यासन् । तेह नाकम्महिमानः सचन्त यत्र पूर्व्वे साद्ध्याः सन्ति देवाः ॥ नानासुगन्धपुष्पाणि यथाकालोद्भवानि च । पुष्पाञ्जलिर्मया दत्तो गृहाण करुणानिधे ॥ ॐ विष्णुरूपाय विद्महे शुकताताय धीमहि । तन्नो व्यासः प्रचोदयात् ॥** ॐ व्यां वेदव्यासाय नमः मन्त्रपुष्पाञ्जलिं समर्पयामि । स्तुतिप्रार्थना- **व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् । पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥ व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे । नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥ अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः । अभाललोचनः शम्भुर्भगवान् बादरायणः ॥** ॐ व्यां वेदव्यासाय नमः स्तुतिपाठं समर्पयामि । इति साष्टाङ्गं प्रणमेत् । समर्पणम्- ततो हस्ते जलमादाय- अनेन षोडशोपचारपूजनेन श्रीवेदव्यासः प्रीयताम् । इति श्रीवेदव्यास-पूजनानन्तरं सर्वगुरुस्वरूपिणं भगवन्तं श्रीदत्तात्रेयं सम्पूज्योभयोर्मन्त्रजपं च कुर्यात् ।

# अथ श्रीमद्भगवतो दत्तात्रेयस्य पूजनम्

सङ्कल्पः- **ॐ अद्येत्यादि देशकालौ सङ्कीर्त्य चतुर्विधपुरुषार्थसिद्ध्यर्थं श्रीमद्दत्तात्रेयभगवतः पूजनमहं करिष्ये ।**

ध्यानम्- **अन्तर्यामिणमेकमव्ययमजं ज्ञानप्रदं मुक्तिदं भक्तेभ्योऽभयदं दिगम्बरतनुं सर्वत्रगं निर्गुणम् । योगीशं भवसिन्धुतारकमहाज्योतिःस्वरूपं परं ध्याये दत्तवरं गुरुं त्रिनयनं भक्त्या वरेण्यं विभुम् ॥** ततः ''**ॐ द्रां दत्तात्रेयाय नमः**'' इति मन्त्रेणावाहनादि पुष्पसमर्पणपर्यन्तं श्रीमद्दत्तात्रेयं पूजयित्वाङ्गपूजनं कुर्यात् । तद्यथा- वामहस्ते गन्धपात्रं गृहीत्वा दक्षिणेनार्चयेत् । यथा- **ॐ दत्तात्रेयाय नमः** पादौ पूजयामि । **ॐ अत्रिसुताय नमः** गुल्फौ पूजयामि । **ॐ योगिराजाय नमः** जानुनी पूजयामि । **ॐ अनन्तदृशे नमः** जङ्घे पूजयामि । **ॐ जनार्दनाय नमः** कटी पूजयामि । **ॐ दयानिधये नमः** मेढ्रं पूजयामि । **ॐ कलानिधये नमः** नाभिं पूजयामि । **ॐ खं ब्रह्मस्वरूपात्मने नमः** हृदयं पूजयामि । **ॐ अरण्यवासकाय नमः** कण्ठं पूजयामि । **ॐ सोमभ्रात्रे नमः** बाहू पूजयामि । **ॐ कर्मसाक्षिणे नमः** मुखं पूजयामि । **ॐ विश्वम्भराय नमः** जिह्वां पूजयामि । **ॐ सनातनाय नमः** दन्तान् पूजयामि । **ॐ ज्ञानिने नमः** नेत्रे पूजयामि । **ॐ त्रैलोक्यमोहनाय नमः** ललाटं पूजयामि । **ॐ आनन्दमूर्तये नमः** शिरः पूजयामि । **ॐ श्रीपादवल्लभाय नमः** सर्वाङ्गं पूजयामि । इत्यङ्गपूजनं कृत्वा धूपादि नमस्कारान्तं पूजयेत् । **ॐ दिगम्बराय विद्महे अवधूताय धीमहि । तन्नो दत्तः प्रचोदयात् ॥ ॐ परमहंसाय विद्महे परतत्त्वाय धीमहि । तन्नो हंसः प्रचोदयात् ॥ ॐ परब्रह्मणे विद्महे गुरुदेवाय धीमहि । तन्नो गुरुः प्रचोदयात् ॥ अनेकजन्मसम्प्राप्तकर्मबन्धविदाहिने । आत्मबोधप्रदानेन तस्मै श्रीगुरवे नमः ॥** तत उच्चस्वरैः श्रीदत्तात्रेयस्तोत्रपाठं कुर्यात् प्रणमेच्च ।। अनेन पूजनकर्मणा भगवान् दत्तात्रेयः प्रीयतां न मम ।।

## स्वगुरुपूजनम्

अथ गृहस्थाद्यैरुपासकैरध्येतृभिश्चात्र स्वस्वगुरुपूजनं कार्यम् । तत्रोपासकैरधिकारानुसारेण आम्नायोक्तगुरुमण्डलपूजा कार्या । सा च विस्तरभयात् सर्वानुपयोगान्नात्र सङ्गृहीता । सर्वेषामुपदेष्टृपूजा आवश्यकी सङ्क्षेपतो लिख्यते । देशकालकीर्तनान्ते **मम गृहीतामुकदेवतामन्त्रोपासनासाफल्यसिद्धिद्वारा श्रीसद्गुरुनाथदेवताप्रीतये सद्गुरुपादुकापूजनं करिष्ये ।** इति सङ्कल्प्य आसने गुरुं पश्चिमाभिमुखमुपवेश्य तत्पुरतः प्राङ्मुखः स्वगुरुं ध्यायेत् । ''**आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजबोधरूपम् । योगीन्द्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं नित्यमहं नमामि ।।**'' इति । अथवा ''**नमो गुरुभ्यो गुरुपादुकाभ्यो नमः परेभ्यः परपादुकाभ्यः । आचार्यसिद्धेश्वरपादुकेभ्यो नमोऽस्तु लक्ष्मीपतिपादुकाभ्यः ।।**'' इति ध्यात्वा ब्राह्मणैः ''**ॐ यो नो अग्ने अररिवाँ अघा यो रराती वामर्चयति द्वयेन । मन्त्रो गुरुः पुनरस्तु सोऽअस्मा अनुमृक्षीष्ट तन्वै दुरुक्तैः ।।**'' इति मन्त्रेण षोडशोपचारैर्गुरुपादुकां पूजयेत् । स्त्रीशूद्रादिभिस्तु ''**गुरुर्ब्रह्मा गुरुर्विष्णुः**'' इति मन्त्रेण यथाविभवं पूजनं कार्यम् । इति ।

## श्रीवेदव्यासाष्टाक्षरमन्त्रजपविधानम्

(**'बालः पवनदीर्घेन्दुयुक्तो झिण्टीशयुग्जलम् । अत्रिर्व्यासाय हृदयं मनुरष्टाक्षरो मतः ।।**' व्यासमन्त्रमाह– बाल इति । बालो वकारः पवनदीर्घेन्दुयुतः यकाराकारबिन्दुयुतः यां 'व्यां' । जलं झिण्टीशयुग् वकार एकारयुतः वे । अत्रिर्दः । व्यासाय स्वरूपम् । हृदयं नमः । यथा– ''(ॐ) **व्यां वेदव्यासाय नमः**'' इत्यष्टाक्षरो मन्त्रः ।)

विनियोगः– अस्य श्रीवेदव्यासमन्त्रस्य ब्रह्मा ऋषिः । अनुष्टुप्छन्दः । सत्यवतीसुतो देवता । व्यां बीजम् । नमः शक्तिः । ममाभीष्टसिद्ध्यर्थे जपे विनियोगः ।।





ऋष्यादिन्यासः– **ॐ ब्रह्मऋषये नमः** शिरसि । **अनुष्टुप्छन्दसे नमः** मुखे । **सत्यवतीसुतदेवतायै नमः** हृदि । **व्यां बीजाय नमः** गुह्ये । **नमः शक्तये नमः** पादयोः । **विनियोगाय नमः** सर्वाङ्गे ।।

हृदयादिषडङ्गन्यासः– **ॐ व्यां** हृदयाय नमः । **ॐ व्यीं** शिरसे स्वाहा । **ॐ व्यूं** शिखायै वषट् । **ॐ व्यैं** कवचाय हुम् । **ॐ व्यौं** नेत्राभ्यां वौषट् । **ॐ व्यः** अस्त्राय फट् ।। एवं कराङ्गन्यासं कुर्यात्– **ॐ व्यां** अङ्गुष्ठाभ्यां नमः । **ॐ व्यीं** तर्जनीभ्यां नमः । **ॐ व्यूं** मध्यमाभ्यां नमः । **ॐ व्यैं** अनामिकाभ्यां नमः । **ॐ व्यौं** कनिष्ठिकाभ्यां नमः । **ॐ व्यः** करतलकरपृष्ठाभ्यां नमः । इति कृत्वा ध्यायेत्– **व्याख्यामुद्रिकया लसत्करतलं सद्योगपीठस्थितं वामे जानुतले दधानमपरं हस्तेषु विद्यानिधिम् । विप्रव्रातवृतं प्रसन्नमनसं पाथोरुहाङ्गद्युतिं पाराशर्य्यमतीव पुण्यचरितं व्यासं स्मरेत्सिद्धये ।।१।।** (जपेदष्टसहस्राणि पायसैर्होममाचरेत्) अस्य पुरश्चरणमष्टसहस्रजपः । पायसान्नेन दशांशतो होमः ।। एवं कृते मन्त्रः सिद्धो भवति । सिद्धे च मन्त्रे मन्त्री प्रयोगान् साधयेत् । तथा च (एवं सिद्धमनुर्मन्त्री कवित्वं शोभनाः प्रजाः । व्याख्यानशक्तिं कीर्तिं च लभते सम्पदां चयम् ।।) इस प्रकार से मन्त्र सिद्ध हो जाने पर साधक को सुन्दर कवित्वशक्ति, अच्छी सन्तान, व्याख्यानशक्ति, कीर्ति एवं सम्पत्ति प्राप्त होती है ।।

।। इति मन्त्रमहोदधौ श्रीवेदव्यासाष्टाक्षरमन्त्रप्रयोगः ।।

## मृत्युञ्जयपुटितवेदव्यासमन्त्रजपविधानम्

**मृत्युञ्जयेन पुटितं यो व्यासस्य मनुं जपेत् । सर्वोपद्रवसन्त्यक्तो लभते वाञ्छितं फलम् ॥१॥ तारः शूली वामकर्णबिन्दुयुक्तः ससर्गशः । मृत्युञ्जयस्य मन्त्रोऽयं त्रिवर्णो मृत्युनाशनः ॥२॥ जप्तोऽयं केवलो नृणामिष्टसिद्धिं प्रयच्छति । किं पुनस्तेन पुटितो वेदव्यासमनूत्तमः ॥३॥**

जो व्यक्ति मृत्युञ्जय के मन्त्र से सम्पुटित व्यासमन्त्र का जप करता है वह सब उपद्रवों से मुक्त होकर वाञ्छित फल प्राप्त करता है ।।१।। तार (ॐ), वामकर्ण बिन्दुसहित शूली (जूं) एवं विसर्गसहित सकार (सः) यह (**ॐ जूं सः**) तीन अक्षर का मृत्युनाशक मृत्युञ्जय का मन्त्र है ।।२।। यह अकेला मृत्युञ्जय का मन्त्र ही जप करनेवाले मनुष्यों को इष्टसिद्धि प्रदान कर देता है, पुनः यदि इससे सम्पुटित व्यास के (**ॐ जूं सः व्यां वेदव्यासाय नमः सः जूं ॐ**) इस मन्त्र का जप किया जाय तो इसके फल का क्या कहना है ।।३।।

।। इति मन्त्रमहोदधौ मृत्युञ्जयसम्पुटितवेदव्यासमन्त्रः ।।

## धर्मसिन्धौ पूजासमुच्चये च व्यासपूजाविधानम्

**स्तुवन्मोहतमःस्तोमभानुभावमुपेयुषः ।**
**स्तुमस्तान्भगवत्पादान्भवरोगभिषग्वरान् ॥**

चातुर्मास्यावासं कर्तुं सन्न्यासी वपनं कारयित्वा (आषाढ्यां पौर्णमास्यां च कारयेद्वपनं यतिः । चातुर्मास्यस्य मध्ये तु वर्जयेद्वपनं यतिः ।। इत्यादिभिः सन्न्यासिनामेकरात्रावस्थानं वपनं व्यासपूजा चोक्ता । तत्रौदयिकी पूर्णिमा ग्राह्या । ''त्रिमुहूर्ताधिकं ग्राह्यं पर्व क्षौरप्रणामयोः'' इति विश्वेश्वर्यामुदाहृतवचनात्) आचम्य देशकालौ सङ्कीर्त्य– **ॐ अद्य श्रीकृष्ण-व्यास-भाष्यकाराणां सपरिवाराणां पूजनं करिष्ये ।** इति सङ्कल्प्य मध्ये **ॐ श्रीकृष्णाय नमः** श्रीकृष्णं स्थापयामि पूजयामि । ततः पूर्वादिक्रमेण प्रादक्षिण्येन **ॐ वासुदेवाय नमः । ॐ सङ्कर्षणाय नमः । ॐ प्रद्युम्नाय नमः । ॐ अनिरुद्धाय नमः ।** ततः श्रीकृष्णपञ्चकदक्षिणे मध्यभागे **ॐ वेदव्यासाय नमः ।** तत्पूर्वतः प्रादक्षिण्येन **ॐ सुमन्तवे नमः । ॐ जैमिनये नमः । ॐ वैशम्पायनाय नमः । ॐ पैलाय नमः ।** इति व्यासपञ्चकमावाह्य श्रीकृष्णादिवामे **ॐ भाष्यकाराय नमः । ॐ श्रीशङ्कराय नमः ।** तत्पूर्वतः प्रादक्षिण्येन **ॐ पद्मपादाय नमः । ॐ विश्वरूपाय नमः । ॐ त्रोटकाय नमः । ॐ हस्तामलकाय नमः ।** श्रीकृष्णपञ्चके श्रीकृष्णपार्श्वयोः **ॐ ब्रह्मणे नमः । ॐ रुद्राय नमः ।** ततः पूर्वादिचतुर्दिक्षु **ॐ सनकाय नमः । ॐ सनन्दनाय नमः । ॐ सनातनाय नमः । ॐ सनत्कुमाराय नमः ।** श्रीकृष्णपञ्चकात्पुरतः **ॐ गुरवे नमः । ॐ परमगुरवे नमः । ॐ परमेष्ठिगुरवे नमः । ॐ परात्परगुरवे नमः । ॐ ब्रह्मणे नमः । ॐ वसिष्ठाय नमः । ॐ शक्तये नमः । ॐ पराशराय नमः । ॐ व्यासाय नमः । ॐ शुकाय नमः । ॐ गौडपादाय नमः । ॐ गोविन्दपादाय नमः । ॐ शङ्कराचार्याय नमः । ॐ सर्वब्रह्मविद्भ्यो नमः ।** पञ्चकत्रयस्याग्नेये **ॐ गणेशाय नमः ।** ईशाने **ॐ क्षेत्रपालाय नमः ।** वायव्ये **ॐ दुर्गायै नमः ।** नैर्ऋत्ये **ॐ सरस्वत्यै नमः ।** प्रागाद्यष्टदिक्षु **ॐ इन्द्राय नमः । ॐ अग्नये नमः । ॐ**

**यमाय नमः । ॐ निर्ऋतये नमः । ॐ वरुणाय नमः । ॐ वायवे नमः । ॐ सोमाय नमः । ॐ ईशानाय नमः** । तत्र **''ॐ नमो नारायणाय''** इति नारायणाष्टाक्षरेण श्रीकृष्णपूजा कर्तव्या । अन्येषां प्रणवादिनमोऽन्तैस्तत्तन्नाममन्त्रैः पूजा कार्या । पूजान्ते असति प्रतिबन्धे **चतुरो वार्षिकान् मासान् इह वसामि** इति मनसा सङ्कल्प्य । **अहं तावन्निवत्स्यामि सर्वभूतहिताय वै । प्रायेण प्रावृषि प्राणिसङ्कुलं वर्त्म दृश्यते । अतस्तेषामहिंसार्थं पक्षान् वै श्रुतिसंश्रयान् । स्थास्यामि चतुरो मासानत्रैवासति बाधके ॥** इति वाचिकं सङ्कल्पं कुर्यात् । ततो गृहस्थाः प्रतिब्रूयुः । **निवसन्तु सुखेनात्र गमिष्यामः कृतार्थताम् । यथाशक्ति च शुश्रूषां करिष्यामो वयं मुदा ॥** इति । ततो वृद्धानुक्रमेण यतीन् गृहस्था यतयश्च अन्योऽन्यं नमस्कुर्युः । एतद्विधिः पौर्णमास्यां अभवेत् तदा द्वादश्यां कार्यः । इयं सन्न्यासिकर्तृकव्यासपूजा ।।

❀❀❀





# लिखितपद्धत्यनुसारेण श्रीव्यासपूजनम्

(व्यासपूजां प्रवक्ष्यामि सम्यक् संसिद्धिसिद्धये । कृत्वाऽनुष्ठानमाषाढ्यां पूजाङ्गं सन्निधापयेत् ।। प्राणायामत्रयं कृत्वा षडङ्गन्यासपूर्वकम् । व्यासपूजां करिष्यामि इत्युक्तं सलिलं स्पृशेत् ।।)

देशकालौ सङ्कीर्त्य– **ब्राह्मणैः सह व्यासपूजां करिष्ये** । इति सङ्कल्प्य पीठादौ मध्ये अष्टदले कमलकर्णिकायाम् **ॐ आं आधारशक्तये नमः । ॐ कूं कूर्माय नमः । ॐ अं अनन्ताय नमः । ॐ पृं पृथिव्यै नमः । ॐ क्षीं क्षीरसमुद्राय नमः । ॐ श्वें श्वेतद्वीपाय नमः । ॐ मं मणिमण्डपाय नमः । ॐ कं कल्पवृक्षाय नमः । ॐ रं रत्नवेदिकायै नमः । ॐ रं रत्नसिंहासनाय नमः । ॐ सं सर्वशक्तिकमलासनाय नमः** । कृष्णस्याग्नेये **ॐ गं गणेशाय नमः** । नैर्ऋत्ये **ॐ सं सरस्वत्यै नमः** । वायव्ये **ॐ दुं दुर्गायै नमः** । ईशाने **ॐ क्षं क्षेत्रपालाय नमः** । कृष्णपञ्चक–स्याग्नेयकोष्ठे **ॐ ब्रह्मणे नमः** । ईशानकोष्ठे **ॐ रुद्राय नमः** । पीठमध्ये **ॐ कृष्णाय नमः** । कृष्णपूर्वे **ॐ वासुदेवाय नमः** । तद्दक्षिणे **ॐ सङ्कर्षणाय नमः** । पश्चिमे **ॐ प्रद्युम्नाय नमः** । उत्तरे **ॐ अनिरुद्धाय नमः** । कृष्णपञ्चकस्य दक्षिणे मध्यकोष्ठे **ॐ वेदव्यासाय नमः** । तत्पूर्वे **ॐ वैशम्पायनाय नमः** । दक्षिणे **ॐ सुमन्तवे नमः** । तत्पश्चिमे **ॐ जैमिनये नमः** । उत्तरे **ॐ पैलाय नमः** । कृष्णपञ्चकस्योत्तरे मध्यकोष्ठे **ॐ श्रीशङ्कराचार्येभ्यो नमः** । तत्पूर्वे **ॐ विश्वरूपाचार्येभ्यो नमः** । तद्दक्षिणे **ॐ पद्मपादाचार्येभ्यो नमः** । तत्पश्चिमे **ॐ हस्तामलका-चार्येभ्यो नमः** । तदुत्तरकोष्ठे **ॐ त्रोटकाचार्येभ्यो नमः** । कृष्णपञ्चकस्य पश्चिमे मध्यकोष्ठे **ॐ सनकाय नमः** । तत्पूर्वे **ॐ सनन्दनाय नमः** । तद्दक्षिणे **ॐ सनातनाय नमः** । तत्पश्चिमे **ॐ सनत्कुमाराय नमः** । तदुत्तरे **ॐ कपिलाय नमः** । कृष्णपञ्चकस्य नैर्ऋत्ये मध्यकोष्ठे **ॐ ऋषभदेवाय नमः** । तत्पूर्वे **ॐ दत्तात्रेयाय नमः** । तद्दक्षिणे **ॐ शुकाय नमः** । तत्पश्चिमे **ॐ नारदाय नमः** । तदुत्तरे **ॐ संवर्ताय नमः** ।

कृष्णपञ्चकस्य वायव्ये मध्यकोष्ठे **ॐ श्वेतकेतवे नमः** । तत्पूर्वे **ॐ दुर्वाससे नमः** । तद्दक्षिणे **ॐ जड़भरताय नमः** । तत्पश्चिमे **ॐ रैवताय नमः** । तदुत्तरे **ॐ वामदेवाय नमः** । कृष्णपञ्चकस्य पूर्वे **ॐ द्रविडाचार्येभ्यो नमः** । तत्पूर्वे **ॐ गोविन्दभगवत्पूज्यपादाचार्येभ्यो नमः** । तद्दक्षिणे **ॐ गौडपादाचार्येभ्यो नमः** । तत्पश्चिमे **ॐ विवरणाचार्येभ्यो नमः** । तदुत्तरे **ॐ समस्तब्रह्मविद्याप्रवर्त्तकाचार्येभ्यो नमः**। कृष्णपञ्चकस्याग्नेये मध्यकोष्ठे **ॐ गुरुभ्यो नमः** । तत्पूर्वे **ॐ परमगुरुभ्यो नमः** । तद्दक्षिणे **ॐ परमेष्ठिगुरुभ्यो नमः** । तत्पश्चिमे **ॐ परात्परगुरुभ्यो नमः** । तदुत्तरे **ॐ समस्तब्रह्मविद्यासम्प्रदायिभ्यो नमः** । कृष्णपञ्चकस्येशाने मध्यकोष्ठे **ॐ आत्मने नमः** । तत्पूर्वे कोष्ठे **ॐ अन्तरात्मने नमः** । तद्दक्षिणकोष्ठे **ॐ परमात्मने नमः** । तत्पश्चिमकोष्ठे **ॐ सर्वात्मने नमः** । तदुत्तरकोष्ठे **ॐ परब्रह्मणे नमः** । ततो दिक्षु मण्डले पूर्वादिक्रमेण **ॐ इन्द्राय नमः** । **ॐ अग्नये नमः** । **ॐ यमाय नमः** । **ॐ निर्ऋतये नमः** । **ॐ वरुणाय नमः** । **ॐ वायवे नमः** । **ॐ सोमाय नमः** । **ॐ ईशानाय नमः** । ईशानपूर्वयोर्मध्ये **ॐ ब्रह्मणे नमः** । निर्ऋति-वरुणयोर्मध्ये **ॐ अनन्ताय नमः** । तदनन्तरं पूजयेत् ।।





## होमविधानम्

आचार्यः कर्मभूमिमध्ये स्थण्डिलं कुर्यात् । सपत्नीको यजमानः स्थण्डिलसमीपे आगत्य उपविशेत् । ततः पञ्चगव्ययुतकुशोदकेनात्मानं हवनसामग्रीं च सम्प्रोक्ष्य स्वस्तिवाचनपूर्वकं सङ्कल्पं कुर्यात् ।

**होमसङ्कल्पः- ॐ अद्येत्यादि देशकालौ सङ्कीर्त्य अमुकगोत्रः अमुकशर्मा (वर्मा, गुप्तः) कृतस्य एतत्सङ्ख्याकश्रीवेदव्यासमन्त्रजप-कर्मणः साङ्गतासिद्धिपूर्वकं तत्सम्पूर्णफलप्राप्त्यर्थं तद्दशांशहवनादि कर्माहं करिष्ये ।**

**भूमिपूजनम्- ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री । पृथिवीँय्यच्छपृथिवीन्दृग्गूंहपृथिवीम्मा हिग्गूंसीः ।।** ॐ भूर्भुवः भूम्यै नमः । इति पूजयेत् ।। पुनः '**ॐ स्थण्डिला-धिष्ठातृदेवताभ्यो नमः**' इति स्थण्डिलं सम्पूज्य पञ्च भूसंस्कार-पूर्वकमग्निं स्थापयेत् ।

**ॐ अद्य करिष्यमाणश्रीवेदव्यासमन्त्रजपनिमित्तकहवनकर्मणि पञ्च भूसंस्कारपूर्वकं वरदनामाग्नेः स्थापनं करिष्ये ।।**

इति सङ्कल्प्य त्रिभिः कुशैः प्राक्संस्थमुदक्संस्थं वा त्रिः **परिसमूह्य** तान् कुशानैशान्यां परित्यज्य, गोमयोदकाभ्यां त्रिः **संलिप्य** स्फ्येन स्रुवमूलेन वा प्रागग्रमुत्तरोत्तरक्रमेण प्रादेशपरिमाणाः षडङ्गुलान्तरालाः तिस्रो **रेखाः कृत्वा** उल्लेखनक्रमेण अनामिकाङ्गुष्ठाभ्यां **मृदमुद्धृत्य** वामहस्ते धृत्वा दक्षिणहस्तेन ईशानकोणे प्रक्षिप्य उदकेन न्युब्जमुष्टिना प्राजापत्यतीर्थेन **वेदीमभ्युक्ष्य**, श्रोत्रियागाराद् गोष्ठादरणिसम्भवात् स्वगृहाद्वा सुवासिन्यानीतं तैजसेन पात्रयुग्मेन सम्पुटीकृतं प्रदीप्तं बह्वङ्गारमयं निर्धूमं वरदनामाग्निं स्थण्डिलादाग्नेय्यामीशान्यां वा निधायाचार्यः '**हुं फट्**' इति मन्त्रेण क्रव्यादांशं नैर्ऋत्यां क्षिप्त्वा **स्वाभिमुखं** वाग्यतः स्थापयेत् । अग्न्यावाहनम्- **ॐ एषो ह देवः प्रदिशोऽनु सर्व्वाः पूर्व्वो ह जातः सऽउ गर्ब्भेऽअन्तः । सऽएव जातः**

**स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति सर्व्वतो मुखः ।।** ॐ वरदनामाग्निमावाहयामि ।। प्रतिष्ठापनम्- **ॐ मनो जूति.।।** ॐ वरदनाम्नाम्ने सुप्रतिष्ठितो वरदो भव । सजलहस्तेन प्रदक्षिणपूर्वकमग्निं सम्मुखं कृत्वा ध्यायेत्- **ॐ चत्त्वारि श्रृङ्गा त्रयोऽअस्य पादा द्वे शीर्षे सप्त हस्तासोऽअस्य । त्रिधा बद्धो व्वृषभो रोरवीति महो देवो मर्त्यां२।।ऽआविवेश ।। अग्ने वैश्वानर शाण्डिल्यगोत्र शाण्डिल्यासितदेवलेति त्रिप्रवर भूमिमातः वरुणपितः मेषध्वज प्राङ्मुख मम सम्मुखो भव ।।** इति अग्निस्थापनानन्तरमीशान्यां नवग्रहपूजनं कृत्वा कुशकण्डिकां कुर्यात् ।

# कुशकण्डिका

तत्रोत्तरासने ब्रह्माणं वृणुयात् । यजमानः- **ॐ अद्य श्रीवेदव्यासपूजाङ्गभूतहोमकर्मणि कृताकृतावेक्षणरूपकर्मकर्तुम् अमुक-गोत्रम् अमुकशर्माणं ब्राह्मणम् एभिर्वरणोपहारैर्ब्रह्मत्वेन त्वामहं वृणे ।** '**ॐ वृतोऽस्मि**' इति ब्रह्मा वदेत् । यजमानः- **ॐ अस्मिन् कर्मणि त्वं मे ब्रह्मा भव, 'भवामि'** इति ब्रह्मा वदेत् । वृतं ब्रह्माणमग्नेः पूर्वतो गमयित्वा पूर्वसङ्कल्पितदक्षिणासने उपवेशयेत् । ब्रह्मा च वाग्यतो भवेत् । प्रत्यक्षब्रह्मणोऽभावे पञ्चाशत्कुशनिर्मितं यथासम्भवकुशमयं वा प्रदक्षिणग्रन्थिकं ब्रह्माणमग्नेः पुरस्तात्पश्चाद्वा आनीय अग्नेः दक्षिणे पीठादौ प्रागग्रास्तीर्णकुशेषु स्थापयेत् । प्रतिनिधिभूत आचार्यः अग्नेरुत्तरतः पश्चिमभागे प्रणीताप्रणयनं कुर्यात् । **'ब्रह्मन् अपः प्रणेष्यामि' । 'यं देवता व्वर्द्धय त्वं नाकस्य पृष्ठे यजमानोऽअस्तु । सप्त ऋषीणाग्गुँ सुकृता यत्र लोकस्तत्रेमं यजमानं च धेहि ।। ॐ प्रणय ।।** इति ब्रह्मणानुज्ञातः प्रणीतासंस्कारार्थमेकमासनं पूर्वभागे प्रणीताप्रणयनार्थं द्वितीयमासनं प्रागग्रैः कुशैः कल्पयित्वा प्रणीतापात्रं वामहस्ते कृत्वा दक्षिणहस्तोद्धृतपात्रस्थजलेनात्माभिमुखं सम्पूर्य कुशैराच्छाद्य पश्चिमासने दक्षिणहस्तेन निधाय अनामिकया तत्पात्रमालभ्य ब्रह्मणो मुखमवलोक्य दक्षिणहस्तेन गृहीत्वा अग्नेरुत्तरतः प्राक्कल्पिते पूर्वासने निदध्यात् । पूर्वादिदिक्षु बहिः समन्ताद् द्वादशाङ्गुलं पञ्चाङ्गुलं वा स्थलं विहाय प्रागग्रैरुदगग्रैश्च त्रिभिस्त्रिभिश्चतुर्भिश्चतुर्भिर्वा कुशैरग्नेः पुरस्तादुदगग्रैः दक्षिणतः प्रागग्रैः पश्चादुदगग्रैः उत्तरतश्च प्रागग्रैः परिस्तरणं कुर्यादिति ।

ततः पात्रासादनार्थं कुशानास्तीर्य अग्नेः पश्चिमतः प्राक्संस्थानि प्राग्विलानि उदगग्राणि, उत्तरतश्चेदुदक्संस्थानि उदग्विलानि, प्रागग्राणि कार्यक्रमेण द्वन्द्वमासादयेत् । तथाहि । पवित्रच्छेदनार्थं त्रीणि कुशतरुणानि, द्वे पवित्रे साग्रे, प्रोक्षणीपात्रं, आज्यस्थाली,

सम्मार्जनकुशास्त्रयः पञ्च वा, उपयमनकुशास्त्रिप्रभृतयः त्रयोदशान्ताः, प्रादेशमिताः पालाश्यः समिधस्तिस्रः, स्रुवः, खादिरः, गव्यमाज्यं, पूर्णपात्रं (षट्पञ्चाशदधिकशतद्वयमुष्टिमितम्), नवग्रहसमिधः, पायसादि, यथासम्भवं बलयः, कर्मोपयोगिनी दक्षिणा, उपकल्पनीयानि द्रव्याणि च स्थापयेत् ।

पवित्रे कृत्वा प्रागग्रयोर्द्वयोः पवित्रयोरुपरि उदगग्राणि त्रीणि पवित्राणि निधायोपरि प्रादेशमात्रमवशेषयित्वा अधोभागे द्वयोर्मूलेन द्वौ कुशौ प्रदक्षिणीकृत्य त्रयाणां मूलाग्राणि एकीकृत्य नखैरस्पृशन् अनामिकाऽङ्गुष्ठेन द्वयोरग्रे छेदयेत् । द्वे ग्राह्ये द्वयोर्मूले त्रीणि चोत्तरतः क्षिपेत् । तत्र ग्रन्थिं कुर्यात् सूत्रादिना बध्नीयाद्वा अविश्लेषाय । ततः प्रोक्षणीपात्रं प्रणीतासन्निधावुत्तरतो निधाय तत्र पात्रान्तरेण हस्तेन सपवित्रेण प्रणीतोदकमासिञ्च्य हस्तद्वयस्य अङ्गुष्ठानामिकाभ्यां धृतपवित्राभ्यामपऽउत्पूय पवित्रे प्रोक्षणीपात्रे निधाय सव्यहस्तेन प्रोक्षणीपात्रं धृत्वा दक्षिणकरेण तत्पात्रमपिधाय नासिकासमं धृत्वा दक्षिणहस्तमुत्तानीकृत्य मध्यमाऽनामिकाऽङ्गुल्योः मध्यपर्वभ्यां जलस्योच्छालनं कृत्वा प्रणीतोदकेन प्रोक्षेत् । ततः पवित्राभ्यां प्रोक्षणीजलेन आज्यस्थालीम् (आज्यस्थाली काँस्यमयी यद्वा ताम्रमयी तथा । मृण्मय्यौदुम्बरी वाऽपि चरुस्थाली प्रशस्यते ।।) उत्तानहस्तेन अमुष्टीकृतेन देवतीर्थेन सम्प्रोक्ष्य सम्मार्जनकुशान्, उपयमनकुशान्, समिधस्तिस्रः, स्रुवम्, आज्यं, पूर्णपात्रं, दक्षिणां च सादनक्रमेणैकैकशः सम्प्रोक्ष्य असञ्चरदेशे (अग्निप्रणीतयोर्मध्ये) सपवित्रं प्रोक्षणीपात्रं स्थापयेत् । ततो ब्रह्मा आज्यस्थाल्यामाज्यं गृहीत्वा तत्र पवित्रे निधाय चरुस्थाल्यां त्रिःप्रक्षालितान् तण्डुलान्प्रक्षिप्य प्रणीतोदकेनासिञ्च्य अन्यदपि जलं निषिच्य चरुस्थालीस्थितपवित्रे प्रोक्षणीषु निधाय कुण्डदक्षिणत आज्याधिश्रयणं कुर्यात् । कुण्डमध्ये एव यजमान आचार्यो वा युगपदुत्तराश्रितमधिश्रयेत् । अर्धश्रित आज्योत्तरतो गृहीतेन





ज्वलदुल्मुकेन उभयोरैशानीमारभ्यैशानीपर्यन्तं पर्यग्निकरणम् । उल्मुकमग्नौ प्रक्षिप्य हस्तेन इतरथावृत्तिः । अर्धश्रिते चरौ दक्षिणेन स्रुवमधोविलम् प्राञ्चं प्रतप्य सव्ये पाणौ तमुत्तानं कृत्वा दक्षिणेन सम्मार्जनकुशानाम् अग्रैर्मूलतोऽग्रपर्यन्तं प्राञ्चं सम्मृज्य कुशमूलैरधस्ताद्भागे स्रुवपुष्करस्याग्रभागमारभ्य मूलपर्यन्तं प्रत्यञ्चं सम्मृज्य सम्मार्जनकुशानग्नौ प्रहरेत् । ततः प्रणीतोदकेन स्रुवमभ्युक्ष्य पुनः प्रतप्यात्मनो दक्षिणतः कुशोपरि निदध्यात् । आज्यमुत्तार्य चरोः पूर्वेणोत्तरतो नीत्वा अग्नेरुत्तरतः प्रोक्षण्याः पश्चिमे निधाय चरुमुत्थाप्य पूर्वेणाग्नेरुत्तरतः आनीय आज्यस्य पश्चिमतो नीत्वा आज्यस्योत्तरतो निधाय आज्यमग्नेः पश्चादानीय स्थापयेत्, चरुं च आज्यस्य पूर्वेण प्रदक्षिणमानीय आज्यस्योत्तरत आसादयेत् । अङ्गुष्ठानामिकाभ्यां धृताभ्यामुदगग्राभ्यां पूर्वपवित्राभ्यामाज्यमुत्पूय अवेक्ष्य सत्यपद्रव्ये तन्निरसनम् । ताभ्यामेवाज्यलिप्ताभ्यां पवित्राभ्यां प्रोक्षण्याः प्रत्युत्पवनम् । पवित्रे प्रोक्षण्यां निदध्यात् । उपयमनकुशान् दक्षिण-करेणादाय वामकरे धृत्वा दक्षिणेन पाणिना घृताक्ताः तिस्रः समिधः प्रागग्राः मूलमध्ययोर्मध्यभागेन धृत्वा तिष्ठन् अग्नावादध्यात् । ततः सपवित्रेण दक्षिणचुलूकगृहीतेन प्रोक्षणीजलेन अग्नेः ईशानादुत्तरपर्यन्तं सम्प्रोक्ष्य इतरथावृत्तिं कृत्वा पवित्रे प्रणीतासु निदध्यात् । अग्निं प्रदीपयेत् । ततो **'वरदनामाग्निः सुप्रतिष्ठितो वरदो भव'** इति प्रतिष्ठाप्य ध्यायेत्- **ॐ चत्त्वारि श्रृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासोऽअस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ२।।आविवेश ।। ॐ अग्निं प्रज्ज्वलितं वन्दे जातवेदं हुताशनम् । सुवर्णवर्णममलमनन्तं विश्वतो मुखम् ।। सर्वतः पाणिपादश्च सर्वतोऽक्षिशिरोमुखम् । विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु ।।** ॐ भूर्भुवः स्वः वरदनामाग्नये नमः । पुनर्यथाविधि पूजयेत् । इति कुशकण्डिकां विधाय पुनः स्थण्डिलपूजनं कुर्यात् । तत आघारावाज्यहवनम् ।

तद्यथा– स्थानोपविष्टः दक्षिणं जान्वाच्य कुशैर्ब्रह्मणान्वारब्धः यजमानेनान्वारब्धश्च उपयमनकुशसहितं प्रसारिताङ्गुलिहस्तं हृदि निधाय मनसा प्रजापतिं ध्यायन् समिद्धतमेऽग्नौ प्रणवपूर्वकं तूष्णीमग्नेरुत्तरप्रदेशे स्रुवेण प्राञ्चमूर्ध्वमृजुं सन्ततमाज्येन पूर्वाघार–माघारयेत् । प्रोक्षण्यां संस्रवप्रक्षेपः । **'ॐ प्रजापतये स्वाहा'** इदं प्रजापतये न मम । इति मनसा । संस्रवप्रक्षेपः । अग्नेर्दक्षिणप्रदेशे उत्तराघारमाघारयेत् । **'ॐ इन्द्राय स्वाहा'** इदमिन्द्राय न मम । संस्रवप्रक्षेपः । इत्युपांशुः । इति पूर्वोत्तरावाघारौ । अग्नेरुत्तरार्धपूर्वार्द्धे आज्येन **'ॐ अग्नये स्वाहा'** इदमग्नये न मम । संस्रवप्रक्षेपः । अग्नेर्दक्षिणार्द्धपूर्वार्धे । **'ॐ सोमाय स्वाहा'** इदं सोमाय न मम । संस्रवप्रक्षेपः । इत्याज्यभागौ । ततो द्रव्यत्यागं कुर्यात्– **अद्य श्रीवेदव्यासमन्त्रजपनिमित्तकहवनकर्मणि इमानि हवनीयद्रव्याणि या या यक्ष्यमाणदेवतास्ताभ्यस्ताभ्यो मया परित्यक्तानि न मम, यथा दैवतानि सन्तु ।।** इति सङ्कल्प्य अग्निं पूजयेत् । तद्यथा– **ॐ अग्ग्ने नय सुपथा रायेऽअस्मान् व्विश्श्वा नि देव व्वयुनानि व्विद्द्वान् । युयोद्ध्यस्मज्जुहुराणमेनो भूयिष्ट्ठान्ते नमऽउक्क्तिं व्विधेम ।।** शान्तिके कर्मणि– **ॐ वरदनामाग्नये नमः** सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि । सप्तजिह्वाख्यमुद्रां प्रदर्श्य प्रार्थनां कुर्यात्– **अग्ने त्वमैश्वरं तेजः पावनं परमं हि तत् । तस्मात्त्वदीयहृत्पद्मे सूर्यादीन्तर्पयाम्यहम् ।।** ततो वक्ष्यमाणक्रमेण वक्ष्यमाणदेवताभ्यो वक्ष्यमाणसंख्यया होमं कुर्यात् । (आदौ द्रव्यपरित्यागः पश्चाद्धोमो विधीयते । प्रयोगे इदमिन्द्राय न ममेति यथार्थतः ।।) इति ।।

ततोऽन्वारब्धेन गणपतये आज्येन वराहुतिं दत्वाऽनन्वारब्धेन नवग्रहादीनाञ्च होमं कृत्वा वेदव्यासमन्त्रेण प्रधानहोमं कुर्यात् । तदनन्तरं पञ्चायतन–सर्वतोभद्रदेवतानां होमः ।





ततः पीठदेवतानामङ्गावरणदेवतानां च होमं कृत्वाअन्यावाहित–पूजितदेवतानां होमं कुर्यात् । एतद्धोमानन्तरमग्निपूजनं गणपत्या–द्यावाहितदेवतानां चैकतन्त्रेण पूजनं विधाय हविःशेषं गृहीत्वा ब्रह्मणान्वारब्धः **स्विष्टिकृद्धोमं** जुहुयात्– **'ॐ अग्नये स्विष्टकृते स्वाहा'** इदमग्नये स्विष्टकृते न मम ।।

**सर्वप्रायश्चित्तनवाहुतयः** । सर्वप्रायश्चित्ताहुत्यर्थं यजमानो ब्रह्मणाऽन्वारब्धो जुहुयात्– **ॐ भूः स्वाहा** इदमग्नये न मम ।।१।। **ॐ भुवः स्वाहा** इदं वायवे न मम ।।२।। **ॐ स्वः स्वाहा** इदं सूर्याय न मम ।।३।। **ॐ त्वन्नोऽअग्ग्ने व्वरुणस्य व्विद्वान्देवस्य हेडोऽअव यासि सीष्ठाः । यजिष्ठो व्वह्नितमः शोशुचानो व्विश्वा द्वेषाग्ँसि प्प्र मुमुग्द्ध्यस्मत् स्वाहा ।।** इदमग्नीवरुणाभ्यां न मम ।।४।। **ॐ स त्वन्नोऽअग्ग्नेऽव मोभवोती नेदिष्ठोऽअस्याऽउषसो व्युष्टौ । अव यक्ष्व नो व्वरुणग्गूं रराणो व्वीहि मृडीकग्गूं सुहवो नऽएधि स्वाहा ।।** इदमग्नीवरुणाभ्यां न मम ।।५।। **ॐ अयाश्चाग्ग्नेऽस्यनभि–शस्तिपाश्च सत्यमित्त्वमयाऽअसि । अयानो यज्ञं व्वहास्ययानो धेहि भेषजग्गुँ स्वाहा ।।** इदमग्नये अयसे न मम ।।६।। **ॐ ये ते शतं व्वरुण ये सहस्रम्य्यज्ञियाः पाशा व्वितता महान्तः । तेभिर्नोऽअद्य सवितोत व्विष्णुर्विश्श्वे मुञ्चन्तु मरुतः स्वर्क्काः स्वाहा ।।** इदं वरुणाय सवित्रे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ।।७।। **ॐ उदुत्तमँव्वरुण पाशमस्मदवाधमँव्विमद्ध्यमग्गुँ श्रथाय । अथा व्वयमादित्यव्व्रते तवानागसोऽअदितये स्याम स्वाहा ।।** इदं वरुणायादित्यायादितये च न मम ।।८।। **ॐ प्रजापतये स्वाहा** इदं प्रजापतये न मम ।।९।। इति सर्वप्रायश्चित्तनवाहुतयः ।।

**इन्द्रादिदशदिक्पालानामेकतन्त्रेण बलिदानम्** । एकस्मिन्नेव पात्रे बलिद्रव्यं निधाय– **ॐ प्राच्च्यै दिशे स्वाहाऽर्व्वाच्च्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहाऽर्व्वाच्च्यै दिशे स्वाहा प्प्रतीच्च्यै दिशे**

**स्वाहाऽर्व्वाच्च्यै दिशे स्वाहोदीच्च्यै दिशे स्वाहाऽर्वाच्च्यै दिशे स्वाहोर्द्ध्वायै दिशे स्वाहाऽर्व्वाच्च्यै दिशे स्वाहाऽवाच्च्यै दिशे स्वाहाऽर्व्वाच्च्यै दिशे स्वाहा ॥** इन्द्रादि दशदिक्पालान् साङ्गान् सपरिवारान् सायुधान् सशक्तिकानेभिर्गन्धाद्युपचारैर्युष्मानहं पूजयामि । इन्द्रादि दशदिक्पालेभ्यः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः एतं सदीपमाषभक्तबलिं समर्पयामि । भो भो सपरिकरा इन्द्रादिदशदिक्पालाः स्वां स्वां दिशं रक्षन्तु बलिं भक्षन्तु मम सकुटुम्बस्य सपरिवारस्य अभ्युदयं कुरुत । आयुःकर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः निर्विघ्नकर्तारः कल्याणकर्तारः वरदाः भवत । अनेन पूजनपूर्वकबलिदानेन कर्मणा सपरिकरा इन्द्रादिदशदिक्पालाः प्रीयन्ताम् न मम ।।

ततः स्थापितदेवतादीनां बलिदानानन्तरं पूर्णाहुतिं जुहुयात् ।।

**पूर्णाहुतिहोमः-** आचान्तः सपत्नीको यजमानः स्थण्डिलस्य पश्चादुपविश्य स्रुवेण स्रुचि द्वादशवारं चतुर्वारं वा आज्यं प्रक्षिप्य तदुपरि रक्तवस्त्रेण रक्तसूत्रेण वा वेष्टितं कर्मापवर्गसमित्सहितं श्रीनालिकेरं निधाय तं गन्धाक्षतपुष्पमालाहरिद्राभिरलङ्कृत्य **'ॐ पूर्णाहुत्यै नमः'** इति सम्पूज्य स्रुचिमूलं वामहस्तेन धृत्वा वामस्तनान्तम् आनीय तदुपरि अधोमुखं स्रुवं नारिकेलसहितं दक्षिणहस्तेन धृत्वा पूर्णाहुतिं दद्यात्– **ॐ मूर्द्धानन्दिवोऽअरतिम्पृथिव्या व्वैश्वानरमृतऽआजातमग्गिनम् । कविग्गूंसम्म्राजमतिथिञ्जनानामासन्ना पात्रञ्जनयन्त देवाः स्वाहा ॥** इदमद्भ्यः वसुरुद्रादित्येभ्यः अग्नये वैश्वानराय सप्तवतेऽग्नये शतक्रतवे च न मम ।। (इति त्यागोच्चारणपूर्वकं प्रोक्षण्यां संस्रवप्रक्षेपः) । इति पूर्णाहुतिहोमः ।।

**वसोर्द्धाराहोमः-** सपत्नीको यजमानः स्रुच्यामाज्यं निक्षिपन् अविच्छिन्नघृतधारया वसोर्धाराहोमं कुर्यात् । (आचारात् स्रुङ्मुखे पूगीफलं निदध्यात्) । **ॐ व्वसोः पवित्रमसि शतधारं व्वसोः पवित्रमसि**





**सहस्रधारम् । देवस्त्वा सविता पुनातु व्वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः स्वाहा ॥** नात्र संस्रवप्रक्षेपः । किन्तु यजमानो वदेत् । इदमग्नये वाजादिभ्योऽग्नये विष्णवे रुद्राय सोमाय वैश्वानराय च न मम । एवं वसोर्धारां हुत्वा यजमानः करसम्पुटेन श्रीवेदव्यासस्य स्तुतिं कृत्वा स्वासने उपविश्य– **ॐ त्र्यायुषञ्जमदग्ग्नेः कश्श्यपस्य त्र्यायुषम् । यद्देवेषुत्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम् ॥ श्रद्धां मेधां यशः प्रज्ञां विद्यां पुष्टिं श्रियं बलम् । तेजऽआयुष्यमारोग्यं देहि मे हव्यवाहन ॥** भस्मना ललाटे ग्रीवायां दक्षिणेंऽसे हृदि च भस्मधारणं कृत्वा संस्रवं प्राशयेत् । कुशपवित्राभ्यां मार्जनम् । अग्नौ पवित्रप्रतिपत्तिः । ततो ब्रह्मणे पूर्णपात्रदानं प्रणीतोदकेन कुर्यात् । यजमानः प्रणीतोदकं गृहीत्वा सङ्कल्पं कुर्यात् । **मया कृतस्य श्रीवेदव्यासमन्त्रजपकर्मणः साङ्गतासिद्ध्यर्थं ब्रह्मन् इदं पूर्णपात्रं सदक्षिणाकं तुभ्यमहं सम्प्रददे ॥** इति सङ्कल्पजलं सहिरण्यं पूर्णपात्रञ्च **'प्रतिगृह्यताम्'** इति वदन् **'ॐ द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु'** इति गृह्णीयात् ।। ततः पश्चात् प्रणीताविमोकः । तेन जलेन यजमानशिरसि मार्जनम् **'ॐ आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम्'** इति कुर्यात् ।। ततो होमदशांशीभूततर्पणानन्तरं यजमानो हस्ते जलं गृहीत्वा पूर्वकृतजपांशीभूतमार्जनदशांशेन ब्राह्मणभोजनसङ्कल्पं कुर्यात् । तद्यथा– **मया ब्राह्मणद्वाराऽऽचरितस्य श्रीवेदव्यासमन्त्रस्यामुकसंख्याक-जपानुष्ठानकर्मणः परिपूर्णतासिद्धये मार्जनदशांशेन सुवासिनी-कुमारिकावटुकसहितम् अमुकसंख्याकं ब्राह्मणभोजनं कारयिष्ये । तेन भगवान् श्रीवेदव्यासः प्रीयतां न मम ॥**

इति वसोर्द्धारासमन्वितपूर्णाहुतिहोमादिकम् ।।

**श्रेयःसम्पादनादिकम्-** तत आचार्य ऋत्विग्भ्यः सह सपत्नीकाय यजमानाय श्रेयोदानं कुर्यात् । आचार्य उदङ्मुखो भूत्वा वृतैः सर्वब्राह्मणैः सह यजमानहस्ते '**ॐ शिवा आपः सन्तु**' इति जलं दद्यात् । '**ॐ सौमनस्यमस्तु**' इति पुष्पाणि दद्यात् । '**ॐ गन्धाः पान्तु** ' इति गन्धं दद्यात् । '**ॐ अक्षताः पान्तु**' इत्यक्षतान् दद्यात् । तत आचारात् '**यत्पापं रोगमशुभमकल्याणं तद्दूरे प्रतिहतमस्तु**' इति पठन् यजमानहस्तस्योपरि जलं भ्रामयित्वा त्रिवारम् अधः क्षिपेत् । तत आचार्यः स्वकीयहस्ते गन्धाक्षतपुष्पफलसहितं जलं गृहीत्वा वदेत् । '**भवन्नियोगेन मया अस्मिन् कर्मणि एभिर्ब्राह्मणैः सह यत्कृतम् आचार्यत्वं तेन यदुत्पन्नं श्रेयः तत्तुभ्यम् अमुकगोत्राय अमुकशर्मणे यजमानायाहं सम्प्रददे । तेन श्रेयसा त्वं श्रेयस्वी भव ।।** इति वदन् यजमानहस्ते जलसहितं फलं दद्यात् । सजलं फलं गृहीत्वा '**भवामि**' इति यजमानो वदेत् । यजमानस्तत्फलं सुरभिदेव्यै समर्पयेत् पत्न्यै वा दद्यात् । ततो यजमानो वरणक्रमेणा-चार्यप्रभृतिभ्य ऋत्विग्भ्यो दक्षिणाप्रदानं कुर्यात् ।

**दक्षिणादानम् ।** तत्रादौ सङ्कल्पमाचरेत् । देशकालौ सङ्कीर्त्य **मया आचरितस्य श्रीवेदव्यासपूजनकर्मणः साङ्गतासिद्ध्यर्थं वृतेभ्य आचार्यादिभ्यो यथाशक्ति दक्षिणाप्रदानं करिष्ये ।** इति सङ्कल्प्य दक्षिणां दद्यात् ।

एवं विधाय प्रधानदेवस्य श्रीवेदव्यासस्य यथोपचारैरुत्तरपूजनं कुर्यात् । पुनः होमदशांशपक्षमाश्रित्य तर्पणं मार्जनं च कृत्वा ब्राह्मणान् भोजयेत् ।

**सपत्नीकयजमानाभिषेकः-** आचार्यो ब्राह्मणैः सह रुद्रकलशप्रधान-कलशयोर्जलैर्यजमानाभिषेकं कुर्यात्- **ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः । पुनन्तु व्विश्श्वा भूतानि जातवेदः पुनीहि मा ।।१।। ॐ देवस्य त्त्वा सवितुः प्प्रसवेऽश्श्विनोर्ब्बाहुब्भ्याम्पूष्णो हस्ताब्भ्याम् । सरस्वत्त्यै व्वाचो यन्तुर्यन्त्रिये दधामि बृहस्प्पतेष्ट्वा साम्म्राज्ज्येना-**





**भिषिञ्चाम्यसौ ।।२।। ॐ देवस्य त्त्वा सवितुः प्प्रसवेऽश्श्विनो-र्ब्बाहुब्भ्याम्पूष्णो हस्ताब्भ्याम् । सरस्वत्त्यै व्वाचो यन्तु यन्त्रेणाग्ग्नेः साम्म्राज्ज्येनाभिषिञ्चामि ।।३।। ॐ देवस्य त्त्वा सवितुः प्प्रसवेऽ-श्श्विनोर्ब्बाहुब्भ्याम्पूष्णो हस्ताब्भ्याम् । अश्श्विनौर्भैषज्ज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्त्यै भैषज्ज्येन व्वीर्यायान्नाद्याया-भिषिञ्चामीन्द्रस्येन्द्रियेन बलाय श्श्रियै यशसेऽभिषिञ्चामि ।।४।। ॐ द्यौः शान्तिरन्तरिक्षग्ंशान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । व्वनस्पतयः शान्तिर्व्विश्श्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्वग्ंशान्तिः शान्तिरेवशान्तिः सा मा शान्तिरेधि ।।५।। ॐ यतो यतः समीहसे ततो नोऽअभयं कुरु । शन्नः कुरु प्प्रजाब्भ्योऽभयन्नः पशुब्भ्यः ।।६।। ॐ सर्वेषां वाऽएष वेदानाग्गुँरसो यत्साम सर्वेषामेवैनमेतद्वेदानाग्गुँरसेनाभिषिञ्चामि ।।७।। ॐ शान्तिः शान्तिः सुशान्तिर्भवतु ।।** स्वस्थाने उपविश्य हस्ते जलं गृहीत्वा तेभ्यो दक्षिणां दद्यात्- **अभिषेककर्तृकेभ्यो ब्राह्मणेभ्यो दक्षिणां दातुमहमुत्सृज्ये, तेन कर्माधीशः प्रीयताम् ।।**

**भूयसीसङ्कल्पः** । हस्ते जलमादाय '**न्यूनातिरिक्तदोषपरिहारार्थं नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च यथाशक्ति भूयसीं दातुमह-मुत्सृज्ये ।**' इति सङ्कल्प्य यथाशक्ति भूयसीं दत्वा तेभ्य आशिषो गृह्णीयात् । ते च सपत्नीकं यजमानमाशिषो दद्युः । क्षमाप्रार्थना, देवताविसर्जनं, सपत्नीकयजमानरक्षाबन्धनं, यजमानेन ब्राह्मणतिलक-करणम्, यजमानाय यजमानपत्न्यै च ब्राह्मणैराशीर्वादप्रदानं कर्तव्यम् । इति हवनादिविधिः ।।

## श्रीवेदव्यासस्तुतिः

व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥१॥
व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे ।
नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥२॥
अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ।
अभाललोचनः शम्भुर्भगवान् बादरायणः ॥३॥
नमोऽस्तु ते व्यास विशालबुद्धे फुल्लारविन्दायतपत्रनेत्र ।
येन त्वया भारततैलपूर्णः प्रज्वालितो ज्ञानमयः प्रदीपः ॥४॥
व्याख्यामुद्रिकया लसत्करतलं सद्योगपीठस्थितं
वामे जानुतले दधानमपरं हस्तेषु विद्यानिधिम् ।
विप्रव्रातवृतं प्रसन्नमनसं पाथोरुहाङ्गद्युतिं
पाराशर्य्यमतीव पुण्यचरितं व्यासं स्मरेत्सिद्धये ॥५॥
नमः सर्वविदे तस्मै व्यासाय कविवेधसे ।
चक्रे पुण्यं सरस्वत्या यो वर्षमिव भारतम् ॥६॥
वदनकमलनिर्यद्यस्य पीयूषमाद्यं
पिबति जनवरोऽयं पातु सोऽयं गिरं मे ।
वदनवनविहारः सत्यवत्याः कुमारः
प्रणतदुरितहारः शार्ङ्गधन्वावतारः ॥७॥
पाराशर्यं परमपुरुषं विश्ववेदैकयोनिं
विश्वाधारं विपुलमतिदं वेद-वेदान्तवेद्यम् ।
शश्वच्छान्तं स्वमतिविषयं शुद्धितेजो विशालं
वेदव्यासं विततयशसं सर्वदाऽहं नमामि ॥८॥





## श्रीवेदव्यासस्तोत्रम्

सिद्धं सिद्धगतिं गुणागुणरतिं वेदान्तविद्यामतिं
वेदं व्यस्य चतुःप्रकारकततिं यज्ञर्त्विजां सद्गतिम् ।
सर्वज्ञाननिधानधामसुमतिं देवर्षिभिः सन्नतिं
वेदव्यासमहं नमामि सुयतिं विद्यागुरूणां गुरुम् ॥१॥
ज्ञेयं विज्ञजनैरुदारहृदयैः शास्त्रार्थसंवर्द्धने
पाराशर्यमतीवसौम्यवपुषं श्रुत्यर्थसम्पादकम् ।
विज्ञं सत्यवतीसुतं सुचरितं विष्णुस्वरूपं प्रभुं
वेदव्यासमहं नमामि सततं विद्यागुरूणां गुरुम् ॥२॥
पैलादिप्रियशिष्यबोधनवरं श्रीशङ्करायुःप्रदं
सद्वर्णाश्रमधर्मरक्षणपरं द्वैपायनं योगिनम् ।
दिव्याङ्गासितशोभनं द्युतिकरं व्याख्यानमुद्राधरं
वेदव्यासमहं नमामि शिरसा विद्यागुरूणां गुरुम् ॥३॥
ध्येयं ब्रह्मविदामशेषसदनं योगीन्द्रमीड्यं विभुं
सौभाग्यास्पदमार्तिपुञ्जहरणं सूत्रैः पुराणैर्जयैः ।
मत्वा मानवदुर्गतिं नरवपुर्धृत्वा जगत्तारकं
वेदव्यासमहं नमामि मनसा विद्यागुरूणां गुरुम् ॥४॥
ज्ञेयं तत्प्रतिवादिवादिविबुधैर्वेदार्थचिन्तापरै-
र्वेद्यं यत्प्रतिभाविभाषितपदं सत्तर्कयुक्त्या युतम् ।
रम्यार्थप्रतिपादनातिमधुरं सर्वेष्टसिद्धिप्रदं
वेदव्यासमहं नमामि वचसा विद्यागुरूणां गुरुम् ॥५॥
भक्तिज्ञानविरागवैभवधरं विद्यायशोदायकं
सिद्धाद्वैतविधायकं बुधवरं कृष्णप्रियं मुक्तिदम् ।
विश्वाधारमनुत्तमं सुखकरं सच्चिन्तने तत्परं
वेदव्यासमहं नमामि मनसा विद्यागुरूणां गुरुम् ॥६॥

विष्णुब्रह्महरात्मकं त्रिजगतां वन्द्यं समर्च्यं विभुं
दुस्तर्कप्रसरप्रसारितमतिद्वन्द्वप्रकाशं मुदा ।
श्रेयोर्थप्रकटीकरोति श्रुतिना लोकोपकृत्यै सदा
वेदव्यासमहं नमामि मनसा विद्यागुरूणां गुरुम् ।।७।।
वेदाब्धिं तपसाऽधिगम्य सुहृदा सिद्धान्तपारं गतं
शास्त्रार्थप्रतिपादनं गणवरैर्लिप्यात्मकं विस्तृतम् ।
शश्वद्धर्मनिरूपणं करुणया रत्नप्रदानं कृतं
वेदव्यासमहं नमामि मनसा विद्यागुरूणां गुरुम् ।।८।।
व्यासस्तोत्रमिदं सुधीजनमुखे माधुर्यसम्प्रापकं
संसारामयभेषजं शुभकरं सर्वार्थसम्पूरकम् ।
यः प्रातः पठति प्रदोषसमये गङ्गाधरेणोदितं
तस्य ज्ञानविरागभक्तिरतुलं व्यासप्रसादाल्लभेत् ।।९।।

इति गङ्गाधरपाठकमैथिलकृतं श्रीवेदव्यासस्तोत्रम् ।

# श्रीवेदव्यासाष्टकम्

कविकलास्तविवेकदिवाकरं समवलोक्य तमोवलितं जनम् ।
करुणया भुवि दर्शितविग्रहं मुनिवरं तमहं सततं भजे ।।१।।

भरतवंशसमुद्धरणेच्छया स्वजननीवचसा परिचोदितः ।
अजनयत्तनयत्रितयं प्रभुर्मुनिवरं तमहं सततं भजे ।।२।।

मतिबलादि निरीक्ष्य कलौ नृणां लघुतरं कृपया निगमाम्बुधेः ।
समकरोदिह भागमनेकधा मुनिवरं तमहं सततं भजे ।।३।।

सकलधर्मनिरूपणसागरं विविधचित्रकथासमलङ्कृतम् ।
व्यरचयच्च पुराणकदम्बकं मुनिवरं तमहं सततं भजे ।।४।।

श्रुतिविरोधसमन्वयदर्पणं निखिलवादिमतान्ध्यविदारणम् ।
ग्रथितवानपि सूत्रसमूहकं मुनिवरं तमहं सततं भजे ।।५।।

यदनुभाववशेन दिवं गतः समधिगम्य महास्त्रसमुच्चयम् ।
कुरुचमूमजयद्विजयो द्रुतं मुनिवरं तमहं सततं भजे ।।६।।

समरवृत्तविबोधसमीहया कुरुवरेण मुदा कृतयाचनः ।
सपदि सूतमदादमलेक्षणं मुनिवरं तमहं सततं भजे ।।७।।

वननिवासपरौ कुरुदम्पती सुतशुचा तपसा च विकर्शितौ ।
मृततनूजगुणं समदर्शयन् मुनिवरं तमहं सततं भजे ।।८।।

व्यासाष्टकमिदं पुण्यं ब्रह्मानन्देन कीर्तितम् ।
यः पठेन्मनुजो नित्यं स भवेच्छास्त्रपारगः ।।९।।

# श्रीदत्तात्रेयस्तोत्रम्

जटाधरं पाण्डुरङ्गं शूलहस्तं कृपानिधिम् ।
सर्वरोगहरं देवं दत्तात्रेयमहं भजे ॥

अस्य श्रीदत्तात्रेयस्तोत्रमन्त्रस्य भगवान्नारदऋषिः, अनुष्टुप्छन्दः, श्रीदत्तः परमात्मा देवता, श्रीगुरुदत्तात्रेयप्रीत्यर्थे जपे विनियोगः ।।

जगदुत्पत्तिकर्त्रे च स्थितिसंहारहेतवे ।
भवपाशविमुक्ताय दत्तात्रेय नमोऽस्तु ते ॥१॥
जराजन्मविनाशाय देहशुद्धिकराय च ।
दिगम्बर दयामूर्ते दत्तात्रेयमहं भजे ॥२॥
कर्पूरकान्तिदेहाय ब्रह्ममूर्तिधराय च ।
वेदशास्त्रपरिज्ञाय दत्तात्रेयमहं भजे ॥३॥
ह्रस्वदीर्घकृशस्थूलनामगोत्रविवर्जित ।
पञ्चभूतप्रदीप्ताय दत्तात्रेयमहं भजे ॥४॥
यज्ञभोक्त्रे च यज्ञाय यज्ञरूपधराय च ।
यज्ञप्रियाय सिद्धाय दत्तात्रेय नमोऽस्तुते ॥५॥
आदौ ब्रह्मा मध्ये विष्णुरन्ते देवः सदाशिवः ।
मूर्तित्रयस्वरूपाय दत्तात्रेय नमोऽस्तुते ॥६॥
भोगालयाय भोगाय योग्ययोग्याय धारिणे ।
जितेन्द्रियजितज्ञाय दत्तात्रेय नमोऽस्तुते ॥७॥
दिगम्बराय दिव्याय दिव्यरूपधराय च ।
सदोदितपरब्रह्म दत्तात्रेय नमोऽस्तु ते ॥८॥
जम्बूद्वीपे महाक्षेत्रे मातापुरनिवासिने ।
जयमान सतां देव दत्तात्रेय नमोऽस्तु ते ॥९॥
भिक्षाटनं गृहे ग्रामे पात्रं हेममयं करे ।
नानास्वादमयी भिक्षा दत्तात्रेय नमोऽस्तु ते ॥१०॥



ब्रह्मज्ञानमयी मुद्रा वस्त्रे चाकाशभूतले ।
प्रज्ञानघनबोधाय दत्तात्रेय नमोऽस्तु ते ॥११॥
अवधूत सदानन्द परब्रह्मस्वरूपिणे ।
विदेहदेहरूपाय दत्तात्रेय नमोऽस्तु ते ॥१२॥
सत्यरूप सदाचार सत्यधर्मपरायण ।
सत्याश्रय परोक्षाय दत्तात्रेयमहं भजे ॥१३॥
शूलहस्त गदापाणे वनमालासुकन्धर ।
यज्ञसूत्रधर ब्रह्मन् दत्तात्रेयमहं भजे ॥१४॥
क्षराऽक्षरस्वरूपाय परात्परतराय च ।
दत्तमुक्तिपरस्तोत्रं दत्तात्रेयमहं भजे ॥१५॥
दत्तविद्याढ्य लक्ष्मीश दत्तस्वात्मस्वरूपिणे ।
गुणनिर्गुणरूपाय दत्तात्रेयमहं भजे ॥१६॥
शत्रुनाशकरं स्तोत्रं ज्ञानविज्ञानदायकम् ।
सर्वपापं शमं याति दत्तात्रेय नमो नमः ॥१७॥
इदं स्तोत्रं महद्दिव्यं दत्तप्रत्यक्षकारकम् ।
दत्तात्रेयप्रसादाय नारदेन प्रकीर्तितम् ॥१८॥

इति नारदपुराणे नारदकृतं श्रीदत्तात्रेयस्तोत्रम् ।

# श्रीगुर्वष्टकम्

शरीरं सुरूपं तथा वा कलत्रं
यशश्चारु चित्रं धनं मेरुतुल्यम् ।
गुरोरङ्घ्रिपद्मे मनश्चेन्न लग्नं
ततः किं ततः किं ततः किं ततः किम् ॥१॥

कलत्रं धनं पुत्रपौत्रादिसर्वं
गृहं बान्धवाः सर्वमेतद्धि जातम् ।
गुरोरङ्घ्रिपद्मे मनश्चेन्न लग्नं
ततः किं ततः किं ततः किं ततः किम् ॥२॥

षडङ्गादिवेदो मुखे शास्त्रविद्या
कवित्वादि गद्यं सुपद्यं करोति ।
गुरोरङ्घ्रिपद्मे मनश्चेन्न लग्नं
ततः किं ततः किं ततः किं ततः किम् ॥३॥

विदेशेषु मान्यः स्वदेशेषु धन्यः
सदाचारवृत्तेषु भक्तो न चान्यः ।
गुरोरङ्घ्रिपद्मे मनश्चेन्न लग्नं
ततः किं ततः किं ततः किं ततः किम् ॥४॥

क्षमामण्डलं भूपभूपालवृन्दैः
सदा सेवितं यस्य पादारविन्दम् ।
गुरोरङ्घ्रिपद्मे मनश्चेन्न लग्नं
ततः किं ततः किं ततः किं ततः किम् ॥५॥

यशो मे गतं दिक्षु दानप्रतापा-
ज्जगद्वस्तु सर्वं करे मत्प्रसादात् ।
गुरोरङ्घ्रिपद्मे मनश्चेन्न लग्नं
ततः किं ततः किं ततः किं ततः किम् ॥६॥



न भोगो न योगो न वा वाजिराजौ
न कान्तामुखे नैव वित्तेषु चित्तम् ।
गुरोरङ्घ्रिपद्मे मनश्चेन्न लग्नं
ततः किं ततः किं ततः किं ततः किम् ॥७॥

अरण्ये न वा स्वस्य गेहे न कार्ये
न देहे मनो वर्तते मे त्वनर्घ्ये ।
गुरोरङ्घ्रिपद्मे मनश्चेन्न लग्नं
ततः किं ततः किं ततः किं ततः किम् ॥८॥

अनर्घ्याणि रत्नानि भक्तानि सम्यक्
समालिङ्गिता कामिनी यामिनीषु ।
गुरोरङ्घ्रिपद्मे मनश्चेन्न लग्नं
ततः किं ततः किं ततः किं ततः किम् ॥९॥

गुरोरष्टकं यः पठेत्पुण्यदेही
यतिर्भूपतिर्ब्रह्मचारी च गेही ।
लभेद् वाञ्छितार्थं पदं ब्रह्मसंज्ञं
गुरोरुक्तवाक्ये मनो यस्य लग्नम् ॥१०॥

इति श्रीमच्छङ्कराचार्यविरचितं श्रीगुर्वष्टकं सम्पूर्णम् ।

# वेदव्यासजी की आरती

वेदव्यासजी की आरति गाऊँ ।
मानुष जनम सुफल करि जाऊँ ।।
श्रीनारायण रूप अपारा, धर्म सनातन परम अधारा ।
शत शत बार शरण तेरी आऊँ ।। वेदव्यासजी...
शक्ति वसिष्ठ वंश उजियारा, सत्यवतीसुत पाराशारा ।
विश्वविदित प्रभु को अपनाऊँ ।। वेदव्यासजी...
जनम जनम का मैं अज्ञानी, वेदपुराण विदित गुणखानी ।
जग में और किसे मैं ध्याऊँ ।। वेदव्यासजी...
श्रुति पुराण भारत विस्तारा, सकल जगत का तू प्रतिपाला ।
चरणकमल रज शीश झुकाऊँ ।। वेदव्यासजी...
वेदव्यासजी की आरति गावै, भक्ति ज्ञान परम सुख पावै ।
अश्रु की गङ्गाधार बहाऊँ ।। वेदव्यासजी...

## व्यासाय पुष्पार्पणम्

**दुस्तर्कानलदग्धजीवनिकरं सम्यक्सुधावर्षया**
**श्रीनारायणदिव्यबोधवपुषा येनावनं साधितम् ।**
**यं संश्रित्य बुधा विशालहृदयाः सिञ्चन्त्यशेषं जगत्**
**तं नत्वा गुरुवर्यमात्मसुहृदं व्यासं सुमं चार्पये ।।**

।। इति गङ्गाधरपाठकमैथिलप्रणीता श्रीवेदव्यासपूजापद्धतिः समाप्ता ।।